॥ नमो वेदान्तवेद्याय रघूत्तमाय ॥

अथ भगवद्रामानन्दाचार्यप्रणीतानन्दभाष्योपेता

# मुण्डकोपनिषत्

यद्द्व्यक्षरमभिधानं विगतक्रममपि जपन् व्याधः ।
कविपुङ्गवपदमागाद् रामाख्यं तद् भजे ब्रह्म ॥१॥
आराध्यं ब्रह्मरुद्रादेर्जगद्धेतुं च मुक्तिदम् ।
दिव्यदेहं गुणाम्भोधिं रामं ब्रह्म समाश्रये ॥२॥
सूत्रवृत्तिकृतौ नत्वा व्यासबोधायनौ मुनी ।
श्रीमन्तं राघवानन्दाचार्यं गुरुं नमाम्यहम् ॥३॥
कुर्वे गुरुं नमस्कृत्य ज्ञानभक्तिदयानिधिम् ।
प्रश्नोपनिषदो रम्यं भाष्यमानन्दसंज्ञकम् ॥४॥

## अथ प्रथममुण्डके प्रथमः खण्डः

**ओं ब्रह्मा देवानां प्रथमः सम्बभूव । विश्वस्य कर्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥ १ ॥**

विद्यासम्प्रदायप्रवर्तकपुरुषपरम्परागर्भामाख्यायिकां प्ररोचनाद्वारा श्रोतुर्विद्यायां सादरप्रवृत्त्यर्थामभिधत्ते–ब्रह्मा हिरण्यगर्भः । देवानां सुराणामिन्द्रमरुदग्निप्रभृतीनाम् । प्रथमः पूर्वमग्र इति यावत् । यद्वा प्रथमो धर्मज्ञानैश्वर्यादिभिर्गुणैः श्रेष्ठः । संबभूव समुत्पन्नः । स कीदृश इत्यत्राह–विश्वस्य सर्वस्य भुवनस्य जगतः कर्ता उत्पादयिता, उत्पादितस्यचास्य सर्वस्य जगतो गोप्ता परिपालकः । विद्याप्रवर्तकेषु प्रथमतया कथितस्य ब्रह्मणो विशेषणमिदं सर्वजगत्कर्तृत्वपालकत्वस्वरूपं विद्यायां गौरवाधानार्थम् । प्रख्यातमहिमपुरुषप्रवर्तितविद्यायां गौरवेणादरः स्वाभाविको भवतु

**अथर्वणे यां प्रवदेत ब्रह्माथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम् । स भारद्वाजाय सत्यवाहाय प्राह भारद्वाजोऽङ्गिरसे परावराम् ॥ २ ॥**

**शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ ।**

श्रोतॄणामिति । स पूर्वोक्तमाहात्म्यो ब्रह्मा । ब्रह्मविद्यां ब्रह्मणः सर्वभूतयोनेः परमात्मनो विद्याम् । तामेव विशिनष्टि सर्वविद्याप्रतिष्ठां सर्वासां विद्यानां प्रतिष्ठा आश्रयस्ताम् । सर्वविद्याश्रयभूतामित्यर्थः । ब्रह्मविद्याविषयभूते ब्रह्मणि सर्वोपादानेऽखिलोपादेयस्यान्तर्गतत्वाद् ब्रह्मविद्यायां सर्वविद्यानामन्तर्भाव इति सर्वविद्याश्रयत्वं ब्रह्मविद्यायाः । ब्रह्मविदाऽविदितस्य कस्यचिदप्यभावादिति भावः । सर्वविद्याश्रयत्वकथनादेव प्रस्तुतेयं ब्रह्मविद्या परमात्मविद्येव नान्येति दृढीकृतं भवति । अथर्वाय अथर्वसंज्ञाय ज्येष्ठपुत्राय प्राह । अथर्वशब्दोऽकारान्तोऽत्रगृहीतः । अथर्वो हि ब्रह्मणः पुत्रेषु बहुषु सृष्टिप्रमुखेषु प्रथमो ब्रह्मसृष्टोऽतोऽस्य ज्येष्ठत्वम् । विद्याग्रहणधारणसामर्थ्यलक्षणञ्च ज्येष्ठत्वमस्यावबुध्यास्मै एव विद्यां प्रोवाचोपदिदेशेति ॥१॥

ब्रह्मा चतुर्मुखो यां ब्रह्मविद्याम् । अथर्वणे अथर्वनाम्ने स्वपुत्राय प्रवदेत प्रोक्तवान् । तां ब्रह्मविद्याम् । अथर्वा एतन्नामा ज्येष्ठो ब्रह्मपुत्रः । अत्राथर्वशब्दो नान्तो विवक्षितः । नान्तादन्तयोरुभयोरप्यथर्वशब्दयोः सत्त्वात् । अङ्गिरे अङ्गिर्नामकाय स्वशिष्याय । पुरा पूर्वस्मिन् काले । उवाचोक्तवान् । स अङ्गिर्नामा मुनिर्भारद्वाजाय भरद्वाजगोत्रोत्पन्नाय । सत्यवाहाय सत्यवाहनाम्ने ऋषये प्राह समुपदिदेश । भारद्वाजः सत्यवाहः । अङ्गिरसे अङ्गिरोनाम्ने शिष्याय प्रोक्तवान् । परावराम् । इदं विद्याविशेषणम् । परस्मात् परस्मादपरेण जनेन गृहीतेयं विद्याऽतः परावरा ताम् । यद्वा परा इतरा विद्या अपरा अपकृष्टाः सन्ति यस्या अपेक्षया सा परावरा ब्रह्मविद्या तामित्यर्थः ॥२॥

हवैशब्दौ निश्चयार्थौ । शौनकः शुनकस्यापत्यं पुमान् शुनकपुत्रो महाशालो महती शाला भवनं यस्य तादृशो बृहत्सौधसमन्वितो महा-

**कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥ ३ ॥**

**तस्मै स होवाच । द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च ॥ ४ ॥**

गृहस्थः । विधिवच्छास्त्रदृष्टेन विधिना समित्पाण्यादिर्भूत्वा । उपसन्नः शरणमुपगतः सन्नङ्गिरसं मुनिं पप्रच्छ पृष्टवान् । समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति नियममनुसरन् तं संप्राप्य पृष्टवाञ्छौनक इति भावः। यद्यप्यथर्वादिषु विधिवदुपसत्तिर्न प्रतिपादिता तथापि शास्त्रस्य सर्व-साधारण्येन तेष्वपि साऽवश्यमासीदिति गम्यते । न ह्यप्रदर्शनमात्रेणाभाव-प्राप्तिः शक्यग्रहा विधेर्नित्यत्वात् । अतोऽस्मदादिष्वपि स विधिरावश्यक इति देहलीदीपकन्यायेन शौनके समुपदर्शित इति ध्येयम् ॥ किं पृष्टवाञ्छौनक इत्याकांक्षायामाह प्रश्नस्वरूपम्—कस्मिन्नु इति । अत्र तुशब्दः वितर्के । हे भगवो भगवन् ! गुरो ! कस्मिन् विज्ञाते सर्वमिदं विज्ञेयं चिदचिदात्मकं जगद् विज्ञातं भवति इति उपादानभूतमृदादि-द्रव्यपरिज्ञान उपादेयभूतघटशरावादिकं विज्ञातं भवतीति लोके दर्शना-दस्य चिदचित्प्रपञ्चस्यापि किमपि भवेन्नु उपादानं यस्मिन्नेकस्मिन् विज्ञाते सर्वस्यास्य विज्ञानं भवेत् तत्किमिति प्रश्नाशयः ॥३॥

एवं पृष्टः सोऽङ्गिरर्षिस्तस्मै शुनकसुताय सत्यवाहायोवाचो-क्तवान् । ह निश्चितम् । द्वे विद्ये वेदितव्ये सम्पादनीये मुमुक्षुभिरिति-शेषः । कथमेवमित्याकांक्षायामाह—इति एवं रूपेण यद् यस्माद् हेतो-र्ब्रह्मविदो वेदार्थावगन्तारः परमार्थज्ञानवन्तो मुनयो वदन्ति । हस्म-निश्चयातिशयार्थम् । ब्रह्मवादिन एव मुमुक्षुसम्पाद्यतया विद्याद्वयं वदन्ति । स्वकल्पनया मया नोच्यत इति भावः । के ते विद्ये इत्यत्राह परा चैवापरा च । परा साक्षात्परमात्मप्रापकतया श्रेष्ठा परमात्मगोचराऽपरोक्षज्ञानरूपा । अपरा अनुसंहितफलस्य पुंसो धर्मानुष्ठानादिना स्वर्गादिफलसाधनभूता अननुसंहितफलस्य चित्तविशुद्धिद्वाराऽपरोक्षज्ञानजननोपयोगिनी परम्परया ब्रह्मप्रापकतयाऽश्रेष्ठा ऋग्यजुःसामाद्यागमजन्यपरोक्षज्ञानरूपा । परमप-रञ्चेति ज्ञानद्वयमपि मुमुक्षुजनैरुपादेयम् । तत्र परज्ञानप्राप्यमेव तत् यस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवतीत्यन्तर्गूढाशयः ॥४॥

**तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते ॥ ५ ॥**

**यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपा-**

तत्र तयोर्विद्ययोर्मध्येऽपरा विद्योच्यत इति शेषः । यद्यप्युद्देश-क्रमेण प्रथमतः परायाः कथनमुचितं तथापि परविद्यायामुपयोगित्वेन प्रथमभावितयाऽऽर्थक्रमस्यापरस्यामेव विद्यायां सत्वाच्छाब्दक्रमापेक्षया चास्य बलीयस्त्वात् प्रथममपरस्या निरूपणं सूचीकटाहन्यायाच्चेति बोध्यम् । ऋग्वेदादयश्चत्वारो वेदाः शिक्षादीनि षडङ्गानि । एतज्जन्यं शाब्दं परोक्षं ज्ञानमेवापरा विद्येत्यर्थः । अथशब्द आनन्तार्यार्थकः । अपरविद्यास्वरूपकथ-नानन्तरं परविद्या निरूप्यत इत्यर्थः । यया विद्यया तद् यत्त्वया— "कस्मिन्नु भगवो विज्ञाते" इत्यादिना सर्वोपादानं पूर्वं पृष्टं तदित्यर्थः । अक्षरं क्षरणशून्यं सर्वोपादानभूतं परं ब्रह्माधिगम्यते प्राप्यत इत्यर्थः । अधिपूर्वकगम्धातोः प्राप्त्यर्थबोधकत्वात् । परया त्वक्षरप्राप्तिः ऋग्वेदादिमयाऽ-परेति विष्णुपुराणाच्च । भूतयोनिशब्दितमक्षरं ब्रह्म येनापरोक्षज्ञानेन प्राप्तं भवति तदेवापरोक्षज्ञानं बोधायनवृत्तिकारश्रीपुरुषोत्तमाचार्यापरपर्याय-भगवद्बोधायनोक्तविवेकविमोकादिसाधनसप्तकजन्यं परा विद्योच्यत इति भावः । उपनिषदामपि वेदान्तर्गतत्वेन प्रथमं वेदजन्यपरोक्षज्ञानविषयो भवति परमपुरुषः पश्चाच्च विवेकादिभिरुपजनितस्यापरोक्षज्ञानस्यापि विषयो भवति ततस्तत्प्राप्तिर्भवत्युपासकस्येत्युभयोर्विद्ययोरुपयोगः परब्रह्मप्राप्ता-वस्तीति रहस्यम् । अत एव 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिस्मृतेः 'तं त्वौपनिषदं पुरुषं पृच्छामी'ति श्रुतेश्च विरोधशङ्कापि न प्रादुर्भवति ॥५॥

परविद्याप्राप्यमक्षरस्वरूपमेव नानाविशेषणविशिष्टं दर्शयति—यत्तदिति । यत् त्वया पूर्वं पृष्टं सर्वोपादानं तत् परविद्याप्राप्यमक्षरम् । अद्रेश्यम् चक्षुरादिज्ञानेन्द्रियजन्यज्ञानाविषयः । अग्राह्यं वागादिकर्मे-न्द्रियव्यापाराऽविषयः । अत एव वाचामगोचरो ग्रहणाद्यविषयश्चेति भावः । अगोत्रं गोत्रं कुलं तद्रहितम् । यदि कोऽप्यस्य मूलं स्यात् तदा

**दम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥ ६ ॥**

**यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः**

तदन्वये जातमेतदक्षरं स्यात् । न च तदस्यास्तीति भावः । अवर्णं वर्णा ब्रह्मक्षत्रादयः शुक्लनीलादयो वा तेऽत्र न सन्तीत्यवर्णम् । अपेतब्रह्मक्षत्रादिजातिविशेषं शुक्लनीलादिरूपरहितं वेत्यर्थः । एतावतेन्द्रियाविषयत्वं मूलपुरुषहीनत्वं ब्राह्मणत्वादिजातिरहितत्वं रूपादिविरहितत्वञ्चाभिधाय सम्प्रति करणशून्यत्वमपि दर्शयति—अचक्षुःश्रोत्रं तदपाणिपादं तत्प्रसिद्धं पूर्वोक्तं वाऽक्षरं चक्षुःश्रोत्राभ्यां शून्यम् । उपलक्षणमिदं ज्ञानेन्द्रियजातस्य तेन ज्ञानेन्द्रियशून्यमित्यर्थः । अपाणिपादमित्यत्र पाणिपादशब्दौ वागादीनां कर्मेन्द्रियाणामुपलक्षकौ तेन वाक्पाणिपादादिकर्मेन्द्रियरहितमित्यर्थः । नित्यं विनाशशून्यं तेन कालापरिच्छिन्नत्वमुक्तम् । विभुं सर्वदेशसम्बन्धिनम् । तेन देशपरिच्छेदराहित्यमुक्तम् । सर्वगतं सर्वेषु स्वातिरिक्तचिदचित्पदार्थेषु स्थूलसूक्ष्मभेदभिन्नेषु गतमन्तःप्रविश्य वर्तमानम् । सुसूक्ष्मं सूक्ष्मतममित्यर्थः । अत एव सूक्ष्मेषु सूक्ष्मतरेष्वप्यन्तःप्रवेशयोग्यतास्यास्तीति भावः । तद् पूर्वोक्तैर्विशेषणैर्युक्तमक्षरम् । अव्ययमपचयादिविकाररहितम् । यदक्षरं धीरा विवेकिनो भूतयोनिं भूतानामुपादानं परिपश्यन्ति परितः साक्षात्कुर्वन्ति । धीरा इत्यनेनाधीराणां न भूतयोनितया साक्षात्कारसंभवः कर्मावृतत्वात्तदीयदृष्टेः । विवेकिनस्तु प्रह्लादादय इव स्तम्भादिष्वपि भगवन्तं श्रीरामं साक्षात्कुर्वन्तीति भावः ॥६॥

यद् भूतयोनिं परिपश्यन्ति धीरा इत्यत्राक्षरस्य भूतयोनित्वं प्रतिपादितं तदेव दृष्टान्तत्रयेण संगमयितुमाह—यथोर्णनाभिरिति । ऊर्णनाभिः कीटविशेषो लूताशब्दवाच्यः । स स्वमुखादेव तन्तून् सृजति बहिः प्रसारयति ततस्तेषु विहरति कृते च विहारे मुखादेव स्वसृष्टान् तन्तून् गृह्णते संहरति । ग्रसतीत्येतत् । न चायं कीटविशेषः तन्तूनां सर्जने संहरणे च किमपि कारणान्तरमपेक्षते न चास्य तस्मिन् कार्यजनने कश्चिद् विकारः पूर्वा-

**संभवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सं-भवतीह विश्वम् ॥ ७ ॥**

**तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ॥ ८ ॥**

वस्थाविनाशादिरूपो भवति तथैव अक्षरमपि कारणान्तरनिरपेक्षं स्वयमविकारमेव समस्तं जगत् सृजति प्रलयावस्थायामुपसंहरति च तस्माद् भूतयोनिरित्युच्यते । यथा पृथिव्यामोषधयः संभवन्ति । पृथिवी हि एकैव ओषधीनां नानाजातीनामुपादानं भवति यतो वृष्टिकाले नानाजातय ओषधयः संभवन्ति समुत्पन्नास्तेऽस्यां पुनश्च ग्रीष्मकाले प्रचण्डतरमार्त्तण्डकिरणसम्पर्काच्छुष्कतामापन्नाः पृथिव्यामेव लीना भवन्ति तथा अक्षरतोऽपि विलक्षणमेतज्जगदुत्पद्यते तत्रैव संहारमपि यातीति एकस्यानन्तप्रपंचोपादानत्वं सिद्धयति । यथा सतो जीवतः पुरुषाच्चेतनात्लोमानि केशनखादीन्यचेतनानि कारणापेक्षया विलक्षणानि जायन्ते तथैव अक्षरात् सर्वप्रपञ्चविलक्षणादेवास्माद् विश्वं चेतनाचेतनात्मकं विविधं जगदिह संसारे संभवति जायते । एतेन यदुपादानं तत् कारणान्तरसापेक्षं भवति, सविकारं भवति, उपादेयसरूपमेव च भवति । अक्षरन्तु निमित्तान्तरनिरपेक्षं निर्विकारमुपादेयविलक्षणञ्च कथं भूतयोनिः स्यादिति शंका निरस्ता । लूताया उपादानभूताया अपि निमित्तान्तरापेक्षाविरहदर्शनाद् विकारराहित्यदर्शनाच्च । पृथिव्याश्चैकस्या अपि नानाकार्योपादानत्वदर्शनात् पुरुषस्य विलक्षणत्वेऽपि केशाद्युपादानत्वदर्शनाच्चेतिभावः॥७॥

अक्षराद् भूतयोनेरिदं विश्वं यथा जायते स क्रमः प्रदर्श्यतेऽत्र मंत्रे । ब्रह्मभूतयोनितया वर्णितमक्षरं ब्रह्मेत्यर्थः । तपसा संकल्परूपेण ज्ञानेन 'यस्य ज्ञानमयं तपः' इत्युक्तेः । चीयते वर्धते सृष्ट्युन्मुखं भवतीत्यर्थः । एकोऽहं बहुस्यामिति संकल्पविशिष्टं ब्रह्म अंकुरजननोन्मुखं बीजमिवोत्फुल्लतां गतमिव भवतीत्येतत् । ततः संकल्परूपतपोविशिष्टाद् ब्रह्मणोऽन्नमयत इत्यन्नं भोग्यभूतं प्रधानम् । अभिजायते । महदादिरूपेण जायत इत्यर्थः । भगवत्संकल्पवशाद् व्याकृतं प्रधानं महदहङ्कारादिपरिणामवद् भवतीतिभावः ।

**यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते ॥ ९ ॥**

इति प्रथममुण्डके प्रथमः खण्डः ॥१॥

अन्नान्महदादिरूपेण परिणतात् प्रधानात् प्राणो भोगोपकरणभूतो मुख्यः प्राणः प्राणापानादिभेदभिन्नो मनोऽन्तःकरणमुपजायते । तस्मादेव सत्यं सत्यो भोग्यभोगोपकरणानां स्वकारणे निलीयमानेऽपि स्वस्वरूपेणवर्तमानतया सत्यशब्दाभिधेयो जीवो भोक्तृवर्गो देवमनुष्यादिरूपेण जायते । यद्यपि न जनिरुत्पत्तिरूपा नित्यत्वात् तथापि शरीरसम्बन्धो जनिरत्र विवक्षितेतिधेयम् । लोका भोगस्थानभूताः स्वर्गभूलोकादयो जायन्ते तस्मादेवान्नात् । ततस्तेषु लोकेषु कर्माणि वर्णाश्रमविहितानि जायन्ते । तेषु कर्मसु निमित्तभूतेषु अमृतमवश्यभोक्तव्यममृतमिव स्वादु स्वर्गादि फलं जायते । यद्वा अमृतममृतत्वसाधकं कर्म कर्मसु मध्ये जायत इत्यर्थः । एतेन संकल्परूपाधिष्ठानशक्त्युपचिताक्षरब्रह्मणाऽधिष्ठितात् प्रधानादेव भोग्य-भोगोपकरणभोगस्थानरूपमिदं विविधविश्वमुत्पद्यते क्रमेणैतेनेति भूतोपादान-त्वमक्षरस्य समर्थितं भवति ॥८॥

पूर्वमन्त्रोक्तार्थमुपसंहरन् तपःशब्दार्थं ब्रह्मणः सर्वज्ञत्वसर्वविक्त्वे च दर्शयति–यः सर्वज्ञो यः पूर्वोक्तलक्षणो भूतयोनिः सर्वं वस्तु स्थूलसूक्ष्म-स्वरूपं सामान्यरूपेण जानातीति सर्वज्ञः स सर्ववस्तु विशेषरूपेण तद-साधारणरूपेणेत्येतत् । वेत्ति,जानातीति सर्ववित् । स्वरूपतः प्रकारतश्च सर्वविषयकज्ञानवान् भूतयोनिपदनिर्दिष्टोऽक्षराख्यः परमपुरुष इति भावः । यस्याक्षरस्य भूतयोनेः तपो ज्ञानमयं सङ्कल्परूपमेव । जगति सर्जनीये संकल्पातिरिक्तं किमप्यन्यत् कर्म तस्य नावश्यकं भवतीति भावः । तस्मात् संकल्पवतः सृष्ट्युन्मुखादक्षराद् ब्रह्मण एतदव्याकृतं प्रधानं नामरूपं जायते । नित्यस्य प्रधानस्य जनेरसंभवान्नामरूपविशिष्टं प्रधानं भवतीत्यर्थः । तन्नामरूपं च किमाकारकमित्यत्राह–अन्नं च भोग्य-भूतपृथिव्याद्याकार एव रूपम् । पृथिवीत्यादिकञ्च नामेत्यर्थः । उपलक्ष-णमेतद् भोक्तृभोगस्थानकर्मादीनां पूर्वमन्त्रोक्तानाम् । एवं पूर्वमन्त्रोक्तं भूतयोनित्वमनूद्य समर्थितमक्षरस्य ब्रह्मणो भवतीतिभावः ॥९॥

इति भगवद्रामानन्दाचार्यप्रणीतानन्दभाष्योपेते प्रथममुण्डके प्रथमखण्डः ॥१॥

—o—

## अथ प्रथममुण्डके द्वितीयः खण्डः

**तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा संततानि । तान्याचरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके ॥ १ ॥**

तत् परविद्याप्राप्यतया निर्दिष्टम् । एतत् सर्वज्ञत्वेन सर्ववित्त्वेन च निर्दिष्टमक्षरं ब्रह्म सत्यम् । स्वरूपकृतेन स्वभावकृतेन विकारेण रहितत्वान्नित्यमित्यर्थः । स्वर्गादिप्राप्त्यर्थतया वेदविहितान्यपि कर्माणि यदि फलाभिसन्धिं वर्जयित्वा क्रियन्ते तदा तेषामपि परमात्मसाक्षात्कारद्वारा परब्रह्मप्राप्तिहेतुत्वं भवतीति दर्शयति—मन्त्रेषु कर्माणीति । मन्त्रेषु ऋग्वेदादिरूपेषु यानि कर्माणि अग्निहोत्रादीनि कवयः क्रान्तदर्शिनोऽतीन्द्रियवस्तुसाक्षात्करणक्षमा वसिष्ठविश्वामित्रादयोऽपश्यन् दृष्टवन्तः तानि कर्माणि त्रेतायां गार्हपत्याग्निदक्षिणाग्न्याहवनीयाग्निरूपाग्नित्रयेऽग्नित्रयस्य संयोगः त्रेता तस्यां त्रेतायामिति व्युत्पत्तेः । यद्वा त्रेतायुगे बहुधा बहुभिः प्रकारैरधिकारिभेदेन फलभेदेन चेत्यर्थः । संततानि कर्मकाण्डभिर्याज्ञवल्क्यैः क्रियमाणतया प्रवृत्तानि । विस्तृतानीत्येतत् । तानि कर्माणि आचरथ कुरुत । यूयम् । के इत्यत्राह सत्यकामाः सत्यं परं ब्रह्म कामयन्ते इति सत्यकामा इतरफलकामनावर्जनपूर्वकं परंब्रह्ममात्रंप्राप्तुं कामयमाना भवन्तः शिष्या इत्यर्थः । स्वर्गादिक्षुद्रफलाभिष्वङ्गराहित्येन क्रियमाणानि तानि कर्माणि बन्धकारकाणि न भवन्ति तस्मात् सत्यकामनया तदाचरणेऽपि परब्रह्मप्राप्तिः परम्परया स्यादेवेति तानि न त्याज्यानीति भावः । सुकृतस्य लोके सुकृतसाध्येऽत्र लोकेऽमुष्मिन् स्वर्गादिलोके वा एष सत्यशब्दोदितः परमात्मैव वो युष्माकं कर्मिणां पन्थाः पथप्रदर्शकः प्रापको वा भवदभीप्सितस्यार्थस्य । यदि भवद्भिः सत्य इष्यते तदा सत्यस्यैव प्रापकः सत्यशब्दितः परमात्मा यदि स्वर्गादिसुखरूपमन्यदिष्यते तदा तस्यापि प्रापकः स एव । कर्मणां स्वातन्त्र्येण फलजनकत्वादितिभावः ॥१॥

**यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने । तदाज्यभागावन्तरेणाहुतीः प्रतिपादयेच्छ्रद्धया हुतम् ॥ २ ॥**

**यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च । अहुतमवैश्वदेवमविधिना हुतमासप्तमाँस्तस्य**

फलाभिसंधिपूर्वककर्मानुष्ठानं यदि कामचारेण क्रियते तदानर्थः । शास्त्रानुसारेण क्रियते तदा हिरण्यगर्भलोकपर्यन्तलोकप्राप्तिः पुनरावृत्तिफला भवतीति प्रदर्शयति—यदेति । हव्यवाहने वैतानिके वह्नौ समिद्ध आज्यकाष्ठादिभिरिन्धनैः प्रक्षिप्तैः दीप्यमाने सति यदा यस्मिन् काले अर्चिर्ज्वाला लेलायते अतिशयेन चलति तदा तस्मिन् काल आज्यभागावन्तरेण आज्यभागयोर्मध्य आहुतीः प्रतिपादयेदाहुतिक्षेपं कुर्यात् । दर्शपूर्णमासप्रकरण आहवनीयाग्नेर्दक्षिणपार्श्व आज्येन "अग्नये स्वाहा" इत्येवमुच्चार्य यागः प्रथमं क्रियते, ततः उत्तरपार्श्व आज्येनैव 'सोमाय स्वाहा' इत्येवमुच्चार्य हूयते, इमावेवाज्यभागौ प्रोच्येते आज्यद्रव्यकर्मकयागरूपत्वादनयोः । आज्यं तु यजमानपत्न्यवेक्षितं घृतमेवोच्यते, "पत्न्यवेक्षितमाज्यमि'ति तल्लक्षणात् । तयोराज्यभागयोर्मध्येऽपरे यागा अनुष्ठीयन्ते तदावापस्थानमित्युच्यते । तदेवात्र अन्तरेणेति श्रुतिस्थशब्देन विवक्षितम् । तत्रैवाहुतिप्रतिपादनं शास्त्रविहितं भवति । अन्यथाऽयथावद्हुतमित्युच्यत इति भावः ॥२॥

शास्त्रदृष्टेन विधिना कृतमपि हवनं यद्यवश्यकर्तव्यतया विहितेतरकर्मरहितं भवति तदा तदहुतमिव भवति अनर्थं च प्रयच्छतीत्याह—यस्येति । यस्य पुंसोऽग्निहोत्रं कर्म यथाविधिकृतमपि भवति परन्तु तत्र यदि दर्शपौर्णमासरूपमङ्गकर्म नानुष्ठीयते, अनाग्रयणं शरत्काले नवान्नग्रहणतः पूर्वं नवान्नग्रहणार्थं क्रियमाणो याग आग्रयणमित्युच्यते । तस्यानुष्ठानं यदि न क्रियते । अतिथिवर्जितं प्रतिदिनमतिथिसत्कारोऽपि शास्त्रविहित एव स यदि न क्रियते । अहुतम् न हूयते यदि स्वयं तदा औपासनहोमरहितमित्येतत् । अवैश्वदेवं वैश्वदेवयागो यदि न क्रियते । अविधिनाहुतम् स्वयं हूयते परन्तु शास्त्रानुसारेण न तदा

लोकान् हिनस्ति ॥ ३ ॥

काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः ॥ ४ ॥

एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन् । तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः ॥ ५ ॥

अश्रद्धया हुतम् शास्त्रोक्तफलसाधकत्वस्य कर्मसु विश्वासरहिततया यदि क्रियते । एतादृशं दर्शपौर्णमासादिविधुरमग्निहोत्रं कर्म तस्य कर्मकर्तुः पुंस आसप्तमान् सप्तपुरुषपर्यन्तान् लोकान् हिनस्ति । त्रयः पूर्वे पितृपितामहप्रपितामहाः त्रयश्चोत्तरे पुत्रपौत्रप्रपौत्राः स्वयमेको यजमान एतेषां सप्तानामपि सुकृतस्य फलं न भवति । अनर्थश्च नानाविधो भवति—एतत्तात्पर्येण हिनस्तीत्युक्तम् । यद्वा भूरादयः सत्यलोकपर्यन्ताः सप्त लोकाः तेषां हिंसाऽप्राप्तिरित्यर्थः । अतः सर्वैरङ्गैर्विशिष्टं कर्म श्रद्धया शास्त्रदृष्टविधिना च कार्यं तथा सति न सप्तलोकहिंसेति भावः ॥३॥

विशेषविधिप्रतिपादनाय वह्नेः सप्तजिह्वा नामोच्चारेण प्रदर्शयति-कालीति । काली करालीत्यादयो लेलायमानाः प्रचलन्त्यः सप्तजिह्वा अर्चिर्विशेषा वह्नेः सन्ति । देवीतिपदं विश्वरुच्याः विशेषणम् । सप्तानां जिह्वानां वा विशेषणं द्रष्टव्यम् ॥४॥

एतेषु वह्निजिह्वाप्रभेदेषु कालीत्यादिषु भ्राजमानेषु इन्धनसमिद्धे वह्नौ प्रचलत्सु, यथाकालं विहितकालातिक्रमणं विना यो यजमानश्चरतेऽग्निहोत्रं कर्माचरति । आददायन् होमीयं द्रव्यं तिलतण्डुलादिकं गृहीत्वेत्यर्थः । तं यजमानमेता यजमानेन विवर्त्तिता आहुतयः सूर्यस्यादित्यस्य रश्मयः किरणा भूत्वा सूर्यरश्मिद्वारेत्यर्थः । नयन्ति प्रापयन्ति । कुत्रेत्याशङ्कायामाह—यत्र यस्मिन् सत्यलोकाख्ये लोकविशेषे । एकः स्वर्गादिलोकेषु सर्वोपरिवास्तव्यतयाऽसमानो देवानामिन्द्रादीनां पतिः

**एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति । प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥ ६ ॥**

**प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म।**

स्वामी अधिवसतीत्यधिवासो वसतीत्यर्थः । हिरण्यगर्भो यत्र वसति तस्मिन् सत्यलोके यजमानमाहुतयः प्रापयन्तीति भावः ॥५॥

आहुतयो यजमानं हिरण्यगर्भलोकं नयन्तीत्युक्तं तत् कथं नयन्तीत्याह—सूर्यस्य रश्मिभिः किरणैः सुवर्चसः सूर्यकिरणसम्पर्केण तेजस्विनो भूत्वा आहुतय एहि एहि आगच्छ आगच्छेति तं यजमानमाह्वयन्त्य एष वः सुकृतो युस्माकं सुकृतसाध्यो लोको हिरण्यगर्भलोकः सत्यलोकाख्यो वर्तते । भवदीय एवायं लोक इत्याकारां प्रियां मनोरमां वाचं वाक्यम् । अभिवदन्त्योऽभित उच्चारयन्त्योर्चयन्त्यः तत्र तत्र प्रदेशे समुपलब्धैरुपकरणैर्मन्दारमालादिभिः पूजयन्त्यः तं यजमानं वहन्ति ब्रह्मलोकं प्रापयन्तीत्यर्थः ॥६॥

ब्रह्मलोकपर्यन्तफलकमपि कर्म ज्ञानविधुरं यदि तदा दुःखमूलमेव भवति । एतत्फलमपि क्षयिष्णुतया न काम्यमिति दर्शयति—समुद्रतरणोपयोगितया दृढा नौका आश्रयणीया भवति यथा तथा संसारसागरतरणोपयोगितया केचन कर्मिणो यागादय एव उपाददते तन्न युक्तम् । तत्र युक्तिमाह—एते अग्निहोत्रादयो यज्ञरूपा यज्ञाकाराः प्लवाः प्लवा इवेति—प्लवाः । तरणोपयोगित्वात् प्लवयागयोः सादृश्यम् । परन्तु अदृढा जीर्णनौकासदृशाः । नहि जीर्णनौकया सागरो महाविशालोऽगाधसलिलसंभृतः केन तरीतुं शक्यते तथैव संसारसागरोऽपि यज्ञरूपनौकासाधनेन न शक्यते केनापि तरितुम् । ते यज्ञरूपाः कतीत्यत्राह—अष्टादश । लाक्षणिकमेतत् । षोडश याज्ञिका एका यजमानपत्नी, एकश्च स्वयं यजमानो मिलित्वाष्टादश संस्थापका एते भवन्ति । एते च संभूयैव यागादि साधयन्ति । अतोऽष्टादश संख्याकयाज्ञिकादिसाध्यत्वाद् यज्ञा अपि अष्टादशेत्युक्ताः । एतेषु अष्टादशसु यागेषु क्रियमाणं हि कर्म अवरमपकृष्टमित्युक्तम् । कर्मयाथार्थ्यज्ञातृभिरिति शेषः । कर्मणां चावरत्वं ज्ञानविधुरत्वात् , फलकामनापूर्वकविहित-

प्तच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति ॥ ७ ॥

अविद्यायामन्तरे वर्त्तमानाः स्वयंधीराः पण्डितंमन्यमानाः । जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥ ८ ॥

अविद्यायां बहुधा वर्त्तमाना वयं कृतार्था इत्यभि-

त्वात्, क्षीयमाणस्वर्गादिरूपावरफलसाधनत्वाच्च । ये मूढा अविवेकिन एतत् कर्म श्रेयः श्रेयःकारणमिति मत्वा अभिनन्दन्ति हृष्टा भवन्ति ते मूढा जरामृत्युं जरावार्द्धक्यं-मृत्युः शरीरप्राणवियोगः तदुभयं पुनरपि यावत्-पुण्यक्षयं स्वर्गलोके स्थित्वा क्षीणे पुण्ये पुनरेव पौनःपुन्येनैव अपियन्ति प्राप्नुवन्ति ॥७॥

अविद्यायामन्तरे अविद्यामध्ये वर्तमानाः । अविवेकप्रधाना इत्यर्थः । स्वयं धीराः स्वमेव बुद्धिमन्तो गुरूपदेशादिकमन्तरेणैव आत्मनैवात्मानं बहुबुद्धिमन्तं जानाना इत्यर्थः । पण्डितंमन्यमाना ऊहापोहक्षमा शास्त्रविषयिणी बुद्धिः पण्डा सा संजाताऽस्येति पण्डितः तमात्मानं मन्यन्ते ये तादृशाः । यत् किमपि वेदितव्यं तत्सर्वं विहितमेव मया, नास्ति च तादृशं किमपि तत्त्वं यदूहापोहाभ्यां मया निश्चेतुमनर्हं भवेद् इत्येतादृशाभिमानवन्त इत्येतत् । जङ्घन्यमाना जन्मजरारोगादिभिरनर्थव्रातैर्नानाविधैः पौनःपुन्येन हन्यमाना व्याकुलीक्रियमाणाः । अन्धेन दर्शनशक्तिविहीनेन चक्षुरिन्द्रियरहितेनेति यावत् । नीयमाना हस्तग्राहेण मार्गसूचनेन वा कुतश्चिद्देशाद्दूरदेशं प्रति प्राप्यमाणाः । अन्धा स्वयमपि दर्शनशक्ति-विरहिता यथा गर्तादिषु पतन्ति उच्चावचभूमिषु स्खलन्ति च तथैव भूता यथोक्तविशेषणविशिष्टा अविवेकवन्तो जनाः । परियन्ति इतस्ततः संसारकान्तारे परिभ्रमन्ति श्ववराहादिषु नानायोनिषु जन्ममरणभाजो भवन्तीति भावः ॥८॥

बालाः परमतत्त्वज्ञानशून्या अविद्यायां प्रकृतिशब्दितायामेव बहुधा

मन्यन्ति बालाः । यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥ ९ ॥

इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं ततो हीनतरं वा विशन्ति ॥ १० ॥

तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां

बहुभिः प्रकारैर्देवत्वमनुष्यत्वादिभिर्वर्तमाना देवमनुष्यत्वाद्यभिमानवत्तया वर्तमानाः । अविद्यासमावृता इति यावत् । अत्यल्पास्थिरस्वर्गादिफलसाधनानुष्ठानेनैव वयमेव कृतार्थाः कृतो निश्चितो निष्पादितो वार्थः कर्त्तव्यार्थो यैस्तादृशा वयमेव नान्य इति अभिमन्यन्ति अभिमानशालिनो भवन्ति । कर्मिणः कर्मानुष्ठानमात्रतत्पराः ते बाला यद् यस्मात् कारणाद् रागात् कर्मफलानुरागवशान्न प्रवेदयन्ति तत्वं न जानन्ति । कर्मणां कीदृशः स्वभावः, कीदृशश्च कर्तुः स्वभावः, कर्माराध्यस्य परमात्मनश्च कः स्वभाव इति सम्यक्तया न जानन्ति तेन हेतुना तत्वज्ञानवैधुर्येणेति यावत् । क्षीणलोकाः पुण्यक्षये सति स्वर्गादिर्लोकः क्षीणो विनष्टो येषां तादृशा आतुरा व्याकुलाः सन्तश्च्यवन्ते पतन्ति मृत्युलोकं विशन्ति ॥९॥

इष्टञ्च पूर्त्तञ्च इष्टापूर्ते, । पृषोदरादित्वात्पूर्त्तपदस्य दीर्घता । यागादिश्रौतं कर्म इष्टमित्युच्यते । वापीकूपतडागदेवतायतनादि स्मार्त कर्म पूर्तमित्युच्यते । तदेव वरिष्ठं श्रेष्ठं मन्यमाना जानन्तः प्रमूढा अतिशयेनाविवेकिनोऽन्यद् इष्टापूर्तापेक्षया भिन्नं श्रेयः श्रेयःसाधनं परमात्मतत्त्वसाक्षात्काररूपं न वेदयन्ते न जानन्ति ते प्रमूढाः सुकृते सुकृतसाध्ये नाकस्य पृष्ठे स्वर्गलोकेऽनुभूत्वा पुण्यफलं दिव्यवनितामृतपानादिसुखमनुभूय पुण्यक्षये जाते सति इमं लोकं मनुष्यलोकं हीनतरं मनुष्यलोकापेक्षया निकृष्टं वा तिर्यग्नरकादिलोकं विशन्ति प्राप्नुवन्ति ॥१०॥

एतावद्ग्रन्थेन कर्मफलस्य स्वर्गादेरनित्यतां प्रदर्श्य परमपुरुषसाक्षात्कारस्य ज्ञानानुगुणवर्णाश्रमविहितकर्मानुष्ठानसहितस्यानन्तस्थिरफलवत्त्वं प्रदर्श-

**चरन्तः । सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥ ११ ॥**

**परीक्ष्य लोकान् कर्मचितान्ब्राह्मणो निर्वेदमायान्ना-** यत्यनेन मन्त्रेण–तप इत्यादिना। तपः स्ववर्णाश्रमोचितं कर्म। श्रद्धा चात्र परमात्मज्ञानं विद्याऽपरपर्यायं तपश्च श्रद्धा च तपःश्रद्धे इमे द्वे अपि अङ्गाङ्गिभावेन ये उपवसन्ति सेवन्ते। कीदृशाः सन्त इत्यत्राह–अरण्ये वर्तमाना इति शेषः। वने वर्तमानाः। उपलक्षणमेतदेकान्तस्थानमात्रस्ययत्र न विघ्नसंभवस्तादृशस्य। शान्ता बाह्यान्तरोभयकरणव्यापारनिवृत्तिविशिष्टा रागरहिता इत्येतत्। विद्वांसः परमात्मतत्वयाथाम्यवेत्तारः। भैक्षचर्यां चरन्तो भिक्षामटमानाः। उपलक्षणमेतद् विधिवशात् प्राप्तेन शरीरधारणस्य। शरीरधारणं भगवदिच्छया संप्राप्तेनान्नफलादिना कुर्वन्त इत्यर्थः। ते अङ्गाङ्गिभावेन कर्मज्ञानञ्चेत्युभयं सेवमानाः। विरजः विगतं रजो येषां तादृशाः क्षीणपुण्यपापाः सूर्यद्वारेण सूर्यो द्वारभूतो यत्र पथि तेन अर्चिरादिना पथेत्यर्थः। प्रयान्ति गच्छन्ति। कुत्रेत्याकांक्षायामाह–यत्रामृत इति। यत्राप्राकृते देशे साकेतपदप्रसिद्धे स प्रसिद्धः सकलवेदेषु वेदोपबृंहणेषु च परविद्यागम्यतया प्रकृतो वेत्यर्थः। अव्ययात्मा अव्ययोऽविकारी आत्मा आत्मस्वरूपं यस्य सः। आत्मपदमुपलक्षणं गुणस्यापि। तथा च स्वरूपतो गुणतश्च विकाररहितः। अमृतो नित्यविग्रहविशिष्टः। पुरुषो निरुपाधिकपुरुषशब्दाभिलप्याक्षरो भूतयोनिशब्दनिर्दिष्टः श्रीराम आस्ते इति शेषः। हिपदं निश्चयार्थम्। एतेन ज्ञानाङ्गतया कर्मानुष्ठानेन सह परमपुरुषज्ञानसेवितः साकेतं भगवद्धामापुनरावृत्तिकरं श्रीरामाधिष्ठितं प्राप्नोतीति निश्चितम् ॥११॥

परमपुरुषज्ञानाय गुरूपसदनमावश्यकमिति दर्शयति–यो ब्राह्मणः साङ्गशिरोवेदाध्ययनवान् विप्रः। कर्मचितान् कर्मणा संपादनीयान् स्वर्गादीन् लोकान् परीक्ष्य यथेह कर्मचितो लोकस्तथामुत्र पुण्यचितो लोकः। इति श्रुत्यनुसारेण कर्मणा प्राप्तस्य मनुष्यादिशरीरस्यानित्यत्वं प्रत्यक्षत एवावसितम्। तद्दृष्टान्तेन स्वर्गादिषु देवादिशरीरस्याप्यनित्यत्वमवधार्य पुण्यसम्पाद्यलो-

स्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ १२ ॥

तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥ १३ ॥

इति प्रथममुण्डके द्वितीयः खण्डः ॥२॥

---

कोऽपि कर्मणैव प्राप्यत इति कर्मचितानिति पदेन तस्यापि ग्रहणम् । अकृतो नित्योऽनन्तस्थिरफलरूपः परमात्मा कृतेन अनित्येन कर्मणा केवलेन नास्ति । साध्यः प्राप्यो वा न भवतीति विवेकेन कर्मसाध्ये क्षयिष्णौ स्वर्गादौ निर्वेदं वैराग्यमायाद् गच्छेत् । स स्वर्गादिविषयक निर्वेदवान् अधिकारी जीवः समित्पाणिः समिधः काष्ठविशेषा होमसाधनभूताः तदुपलक्षिता दर्भादयश्च ते पाणौ यस्य समित्कुशादिपरिपूर्णपाणिः सन्नित्यर्थः। रिक्तपाणिर्न गच्छेत्तु राजानं देवतां गुरुमिति स्मृतेः । तद्विज्ञानार्थं तस्य परमपुरुषस्य विज्ञानाय । परमात्मविज्ञानं लब्धुमित्यर्थः । गुरुमेव गिरति अज्ञानं नाशयति स गुरुः । अज्ञानं निरुध्य ज्ञानप्रदो गुरुरित्युच्यते तमेव । अभिगच्छेदुपसीदेत् । एवकारेण परब्रह्मज्ञानाय गुरूपसदनस्य नियमः सूच्यते । कीदृशं गुरुमित्यात्राह–श्रोत्रियं ब्रह्मनिष्ठम् । श्रोत्रियं श्रुतवेदान्तार्थम् । ब्रह्मनिष्ठम् ब्रह्मणि निष्ठा स्थितिर्यस्य तादृशम् । स्थितप्रज्ञमित्येतत् । ब्रह्मसाक्षात्कारविशिष्टमिति यावत् । ईदृशगुरुद्वारैव परविद्यासंपादनं कुर्यादिति भावः ॥१२॥

सः ब्रह्मनिष्ठो विद्वान् परब्रह्मसाक्षात्कारवान् गुरुः सम्यक् शास्त्रदृष्टविधिना समित्पाणित्वादिना उपसन्नाय स्वसन्निधिं शिष्यभावेन प्राप्ताय । प्रशान्तचित्ताय प्रशान्तं दर्पादिदोषशून्यं चित्तमन्तःकरणं यस्य तादृशाय समवहितचेतस इत्यर्थः । शमः बाह्येन्द्रियनियमनरूपः तेन अन्विताय युक्ताय । उपरतबाह्यकरणग्रामाय तस्मै शिष्याय जिज्ञासावते येन विज्ञानेन अक्षरं स्वरूपतो विकारशून्यं, सत्यं गुणतोऽप्यविकृतं पुरुषं

अथ द्वितीयमुण्डके प्रथमः खण्डः।

**तदेतत् सत्यम्। यथा प्रदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षराद् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति ॥१॥**

**दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः। अप्राणो**

निरूपाधिकपुरुषशब्दवाच्यं परमात्मानं श्रीरामं वेद जानीयात् तां ब्रह्मविद्यां परां परमपुरुषप्राप्तिसाधनभूतां विद्यां प्रवदेत् प्रब्रूयादुपदिशेत्। सच्छिष्यप्राप्तौ विद्योपदेशो नियमतः करणीय एवाचार्येणेति भावः ॥१३॥

इति भगवद्रामानन्दाचार्यप्रणीतानन्दभाष्योपेते प्रथममुण्डके द्वितीयः खण्डः ॥२॥

---

कस्मिन्नु विज्ञाते सर्वं विज्ञातं भवतीति पूर्वं पृष्टं शौनकेन, तदुपदिदिक्षुरङ्गिरा गुरुर्विद्याद्वयस्योपक्रमं कृत्वाऽक्षरप्राप्तिहेतुः पराविद्येति प्रोक्तवान् संप्रति परविद्याविषयोऽक्षरः पुरुष उपदिश्यते यद्विज्ञानेन सर्वविज्ञानं भवति यतः प्रश्नस्य उत्तरंमुक्तं भवेत्। तदेतत् सत्यम्। तत् पूर्वं प्रस्तुतं यत् तदित्यर्थः। एतद् वक्ष्यमाणस्वरूपं सत्यं सत्यशब्दवाच्यमुत्पत्त्यादिसर्वविकारशून्यमक्षरं ब्रह्म संप्रति वर्त्तत इति शेषः। यथा येन प्रकारेण सुदीप्तादिन्धनोपधानेन प्रज्वलितात् पावकाद् वह्नेः सरूपाः पावकसमानाकाराः सहस्रशोऽगणितसंख्याकाः। अनेकश इति यावत्। विस्फुलिङ्गा अग्निकणाः प्रभवन्ते निस्सरन्ति तथा तेनैव प्रकारेण हे सोम्य प्रियदर्शन शौनक। अक्षरात् सूक्ष्मचिदचिच्छरीरकात् परब्रह्मणः श्रीरामाद् विविधा नानाकारा भावाः पदार्था वियद्वायुप्रभृतयो देवादिरूपाश्च। स्थूलचिदचित्स्वरूपा इत्येतत्। प्रजायन्त उत्पद्यन्ते। तत्रैवाक्षरे परे ब्रह्मणि अपियन्ति विलयं प्राप्नुन्ति च ॥१॥

दिव्यो द्योतनगुणवान् स्वयंप्रकाशज्ञानस्वरूपत्वात् परमात्मनो यद्वा द्युसम्बन्धित्वाद् दिव्योऽमूर्तः पाणिपादादिराहित्यश्रुतेः प्राकृतमूर्ति-

**ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥ २ ॥**

**एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ ३ ॥**

रहितः स पूर्वोक्तो भूतयोनिः परमपुरुषोऽक्षरशब्दोदितः। बाह्याऽभ्यन्तरो बहिर्भवो बाह्योऽभ्यन्तरे भव आभ्यन्तरः सर्ववस्तुषु बहिरन्तश्च वर्तमानो 'यः पृथिव्यां तिष्ठन् पृथिवीमन्तरो यमयति' 'यो विज्ञाने तिष्ठन् विज्ञानमन्तरो यमयती'त्यादिश्रुतिभ्यः 'बहिरन्तश्च भूतानां व्याप्य नारायणः स्थितः' इति स्मृतेश्च। सकलचिदचिद्वस्तुव्यापक इत्यर्थः। पुरुषः पुरि शेत इति पुरुषः सर्ववस्तुशरीरक इत्यर्थः। 'तेनेद पुरुषेण पूर्णमि'ति श्रुत्या सर्वस्तूनां परमात्मना पूरितत्वावगतेः। अजो न जायत इत्यजो जन्मरणादिसकलविकाररहितः। अप्राणः प्राणापानादिसम्बन्धशून्यः। अमना मनःसम्पर्करहितः। शुभ्रः कर्माऽवश्यत्वाद् रजस्तमोप्रयुक्तमालिन्यरहितः। पुण्यपापविहीन इति यावत्। अक्षरात् परतः परोऽक्षरमिह प्रधानम् 'अश्नुते स्वविकारमहदादिकं व्याप्नोतीति व्युत्पत्तेः स्वविकारव्यापकमित्यर्थः। यद्वा न क्षरतीत्यक्षरं क्षरणाभावविशिष्टमव्याकृतनामरूपं तस्मादक्षरात् प्रधानात्परो यः पुरुषो जीवाख्यः तस्मादपि परः परमपुरुषः। अत्र दिव्यो ह्यमूर्त इत्यादिविशेषणैः प्रधानव्यावृत्तिः। अप्राणो ह्यमना इत्यादिना जीवव्यावृत्तिः कृता भवति। सर्वचिदचिच्छरीरकः ततो भिन्नश्च भूतयोनिरक्षरो यतः सर्वे भावाः प्रभवन्तीत्याशयः ॥२॥

एवं विशेषणद्वारा भूतयोन्यक्षरस्य स्वरूपं चिदचिद्भ्यो विविच्य तस्मात् प्रादुर्भूतान् भावानपि विशेषतो नामग्राहं दर्शयति—एतस्मात् सर्वभूतयोनेः परमपुरुषरूपादक्षरात् प्राणः प्राणनादिपञ्चवृत्तिः। मनोऽन्तःकरणम्। सर्वेन्द्रियाणि वागादीनि कर्मेन्द्रियाणि चक्षुरादीनि बाह्यज्ञानेन्द्रियाणि च जायन्ते। एतावता भोक्तुर्जीवस्य भोगोपकरणं प्रदर्शितम्। खमाकाशं प्रथमजं भूतम्। वायुर्द्वितीयं भूतम्। ज्योतिस्तेजोधातुः। आपो जलधातुः। विश्वस्य सर्वस्य धारिणी आधारभूता पृथिवी च जायते। एतेन भोक्तृभोग्यवर्गसृष्टिः प्रदर्शिता ॥३॥

**अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदा। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥ ४ ॥**

**तस्मादग्निः समिधो यस्य सूर्यः सोमात्पर्जन्य ओष-**

सर्वेषां भावानामुपादानभूतो भूतयोनिशब्दितपरमपुरुषः कीदृश इति विशेषणैः पुनर्निरूपयति–अग्निर्द्युलोकः 'असौ वाव लोको गौतमाग्नि'रिति श्रुतेः। स एवास्याक्षरब्रह्मणो मूर्धा मस्तकस्थानीयः। चन्द्रसूर्यौ चन्द्रश्च सूर्यश्च चन्द्रसूर्यौ तौ एव अस्य चक्षुषी चक्षुस्थानीयौ। दिशः पूर्वादयः ता एवास्य श्रोत्रेन्द्रियस्थानीया दिश इत्यर्थः। अस्य वाग्-विवृता वाचा विवृता उच्चारिता वागिन्द्रियव्यापाररूपा वेदा ऋग्यजुरादयः सन्ति। वायुः प्रसिद्धो महावायुरेवास्य प्राण देहधारणहेतुः। अस्य हृदयं मनो विश्वम्। समस्तमेव विश्वमस्य मनःसंकल्पाज्जातमिति विश्वस्य हृदयत्वेन निरूपणमिति भावः। पद्भ्यां पृथिवी। पद्भ्यामित्यत्राभेदे तृतीया प्रकृत्यादिभ्योऽभेदे तृतीयानुशासनात्। अस्य पादावेव पृथिवीत्यर्थः। यद्वा पद्भ्यां जाता पृथिवीत्यर्थः। एवंभूत एव भूतयोनिरक्षरः परमपुरुषो हि यतः कारणात् सर्वभूतान्तरात्मा सर्वेषां भूतानामेतच्छरीरत्वादयं सर्वान्तरात्मभूत इत्यर्थः ॥४॥

तस्मादक्षरात् परमपुरुषादग्निर्द्युलोकः पञ्चाग्निविद्याप्रकरणे प्रथमाग्नित्वेन वर्णितोऽग्निर्द्युलोक एवेत्यर्थः। तस्य प्रथमाग्नेर्द्युलोकात्मकस्य समिध इन्धनानि सूर्य एव। सूर्येण द्युलोकस्य प्रदीप्तत्वादित्यर्थः। "तस्यादित्य एव समित्" इति श्रुतेः। सोमात् पर्जन्यः प्रथमाग्नौ द्युलोके सोमभावं गतं भूतसूक्ष्ममेव सोमशब्दवाच्यम्। तस्मात् पर्जन्यो द्वितीयोऽग्निर्भवति। वृष्टिरूपोऽग्निर्भवतीत्यर्थः। तस्मात् पर्जन्यात् पृथिव्यां तृतीये पृथिवीरूपाग्नौ ओषधय उत्पद्यन्ते। ओषधिभ्यो पुरुषाग्नौ हुताभ्यः पुमान् चतुर्थः पुरुषरूपोऽग्निः। योषितायाम् पंचमे योषिद्रूपेऽग्नौ रेतो वीर्यं सिञ्चति आदधाति। ततो रेतोधानात् योषिद्रूपात् पञ्चमाग्नेः सकाशात्

धयः पृथिव्याम् । पुमान् रेतः सिञ्चति योषितायां बह्वीः प्रजाः पुरुषात्संप्रसूताः ॥ ५ ॥

तस्मादृचः साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च । संवत्सरश्च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्यः ॥ ६ ॥

तस्माच्च देवा बहुधा संप्रसूताः साध्या मनुष्याः

प्रजा मनुष्यादयः संभवन्ति । एवं क्रमेण पुरुषाद् भूतयोनिशब्दितादक्षराख्यात् परमपुरुषाद् बह्वीर्बह्वयो नानायोनिगताः प्रजाः सम्प्रसूताः समुत्पन्ना भवन्ति ॥५॥

कर्मसाधनभूता वेदादयः कर्मफलानि स्वर्गादीनि च तस्मादेवाक्षरात् समुत्पन्नानीति दर्शयति । तस्मादक्षराख्यात्परमात्मनः ऋचः ऋङ्मंत्रा गायत्र्यादिछन्दोरूपाः साम गीतिप्रधानः सामवेदः । यजूंषि अनियताक्षरपादानि वाक्यरूपाणि यजुर्वेद इत्यर्थः । दीक्षा यजमानगतयज्ञकर्तृनियमविशेषा मौञ्जीबन्धनादिरूपाः । यज्ञा अग्निहोत्रादिरूपाः । सर्वे क्रतवः समग्रा यूपसहिता यागाः । दक्षिणाश्च एकां गामारभ्य क्रत्वनुसारेण सर्वस्वपर्यन्ताः ऋत्विग्भ्यो दीयमानाः । संवत्सरो यज्ञाङ्गभूताः संवत्सरादयः कालाः । यजमानो यागकर्ता पुरुषः । लोकास्तस्य यजमानस्य कर्मफलभूताः स्वर्गादयो लोकाश्च तस्मादेवाक्षरात् समुत्पन्नाः । लोकान विशिनष्टि द्वाभ्यां विशेषणाभ्याम् । यत्र स्वर्गादिलोकेषु कर्मफलभूतेषु सोमश्चन्द्रः पवते स्वकिरणैस्तत्रत्यान् लोकान् पुनाति । पवित्रयतीत्येतत् । यत्र च स्वर्गादिपु लोकेषु सूर्य आदित्यस्तपतीति शेषः । स्वकिरणैः तत्रत्यान् प्रकाशयतीत्यर्थः । येषु लोकेषु दक्षिणेन पथा कर्मिण उत्तरेण पथा ज्ञानिनः प्रयान्ति । ते लोका अपि परमपुरुषादेवाक्षरात् सृष्टाः इति भावः ॥६॥

कर्माङ्गभूतानामुत्पत्तिमिदानीं दर्शयति—तस्मादक्षराख्यपरमपुरुषादेव देवा इन्द्रादयः कर्माङ्गभूता यदुद्देश्येन कर्माणि विधीयन्ते ते बहुधा बहुप्रकारा मरुद्वस्वादयो गणभेदेन नाना प्रकारा इत्यर्थः । संप्रसूताः सम्यक् प्रसूता समुत्पन्नाः । साध्या देवयोनिविशेषाश्च तस्मादेव

पशवो वयांसि । प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥ ७ ॥

सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्चिषः समिधः सप्त होमाः । सप्त इमे लोकाः येषु चरन्ति प्राणा गुहाशया

संप्रसूताः। मनुष्याः कर्माधिकारिणः । पशवश्चतुष्पदा गवाश्वादयः । वयांसि पक्षिजातय एतेषामपि परम्परया कर्मसु विनियोगो यथायथम्-ह्यः । प्राणाऽपानौ जीवनसाधनभूतौ जीवनं विना कर्माऽनुपपत्तेः । व्रीहियवौ हविर्द्वारा कर्माङ्गभूतौ व्रीहियवौ धान्यानामितरेषामपि समुपलक्षकौ । तपः कृच्छ्रातिकृच्छ्रचान्द्रायणादिरूपं शरीरशोषणात्मकम् । श्रद्धा आस्तिक्यबुद्धिर्यया विना कर्मसु प्रवृत्तेः सिद्धेश्च न संभवो लोकस्य । सत्यमनृतवदनवर्जनरूपम् । अनृतवदनेन कर्मफलेषु विसंवादश्रुतेः । ब्रह्मचर्यमष्टविधमैथुनपरित्यागः । विधिः प्रयोजकं वैदिकं वाक्यम् । स्वर्गकामो यजेतेत्यादिरूपं नित्यकाम्यनैमित्तिकभेदभिन्नमित्यर्थः । एतत्सर्वं कर्माङ्गभूतं परमपुरुषाक्षरात् संभवतीति भावः ॥७॥

तस्मादक्षराख्यपरमात्मनः सप्त सप्तसंख्याकाः प्राणा इन्द्रियाणि ये शीर्ष्णि जाताश्चक्षुर्द्वयं श्रोत्रद्वयं घ्राणद्वयमास्यगता वाक् चेतीमे प्रभवन्त्युत्पद्यन्ते । सप्तार्चिषः प्राणाग्नीनामर्चिषो विषयावद्योतनरूपा एव दीप्तयस्ता अपि सप्त सप्तेन्द्रियजन्यावद्योतनानामपि सप्तविधत्वौचित्यात् । समिध इन्धनान्यपि प्राणाग्नीनामेषां न काष्ठादिरूपा बाह्याग्नेरिव किन्तु विषयरूपा एव विषयसन्निधाने सत्येवेन्द्रियाणां विषयावद्योतनरूपदीप्तिसम्भवात् । सप्त होमा विषयप्रकाशा विषयेन्द्रियसन्निकर्षा वा तेऽपि सप्तसंख्याकाः तत्तन्द्रियजन्यविषयप्रकाशानामिन्द्रियभेदेन सप्तविधत्वात् सन्निकर्षाणामप्येवमेव । सप्त इमे लोका इन्द्रियस्थानभूता गोलकविशेषा इति यावत् । येषु लोकेषु गोलकस्वरूपेषु गुहाशया गुहायां शरीररूपायां हृदयरूपायां वा सुषुप्तिकाले शयाना इमे सप्ताऽपि शीर्षण्याश्चक्षुरादयः प्राणाश्चरन्ति सञ्चारं कुर्वन्ति । ते प्राणाः सप्त सप्त प्रतिपुरुषं

**निहिताः सप्त सप्त ॥ ८ ॥**

**अतः समुद्रा गिरयश्च सर्वेऽस्मात्स्यंदन्ते सिन्धवः सर्वरूपाः। अतश्च सर्वा ओषधयो रसाश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥ ९ ॥**

**पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्। एतद्यो**

धात्रैव गोलकेषु निहिताः स्थापिताः सन्ति। एतत्सर्वमपि परमपुरुषादेवाक्षरान्निर्मितमिति भावः ॥८॥

समुद्राः क्षारोदधिक्षीरोदधिदध्युदधिप्रभृतयः सप्ताऽपि सागरा गिरयो हिमाचलविंध्याचलोदयाचलास्ताचलप्रभृतयोऽनेकविधास्ते सर्वेऽपि अत एतस्मादेवाक्षरात् प्रभवन्तीत्यर्थः। सिन्धवो नद्यः सरयूगङ्गायमुनाप्रभृतयः सर्वरूपा यावत्यः प्रसिद्धा अप्रसिद्धाश्च ता अपि सरितोऽस्मादेवाक्षरात् स्यन्दन्ते प्रस्रवन्ति। सर्वाः समस्ता ओषधयो ब्रीहियवादिरूपा लतागुल्मादिरूपाश्च। तथा रसा मधुरादिभेदेन षड्विधा लताद्यौषधिनिर्यासरूपाश्च ते सर्वेऽपि अतः परमपुरुषादेव भवन्ति। ब्रीहियवादीनां पृथिवीत उपजायमानत्वदर्शनाद् रसानां च तत्तदोषधिभ्यो निर्गमदर्शनात्। परमात्मनः सकाशादुत्पत्तौ संशयवारणायाह—येन हेतुना एषः परमपुरुषो भूतैः पृथिव्यादिभिरोषधिरसात्मकैश्च परमात्मशरीरभूतैर्विशिष्टस्तिष्ठते वर्तते। अन्तरात्मा सर्वभूतान्तर्गत आत्मा अतो हेतोः परमात्मप्रकारभूतैः पृथिव्यादिभिर्जायमाना अपि ओषधयो रसाश्च परमात्मन एव जाताः तस्मात् सर्वस्य हेतुरयमेवाक्षरः परमात्मेति भावः। हि शब्दो हेतुत्वबोधनार्थः ॥९॥

सर्वान्तरात्मभूतपरमपुरुषादुत्पन्नत्वादिदं दृश्यमानं विश्वं समस्तं जगत् पुरुष एव पुरुषोपादानकत्वात् पुरुषात्मकमेव तस्मात्परमपुरुषे सर्वोपादानभूते विज्ञाते सर्वमिदं विज्ञातं भवतीत्युत्तरमुक्तं भवति। 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती'ति प्रश्नस्य पूर्वं कृतस्येति भावः। कर्म तपः, तस्य परमपुरुषकर्म जगत्सर्जनादिरूपं यत् तत् तपः संकल्परूपं

**वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ॥१०॥**

इति द्वितीयमुण्डके प्रथमः खण्डः ॥२।१॥

---

ज्ञानमेव नान्यत्। न हि संकल्पातिरेकेण कश्चिद् व्यापारोऽपरः समाश्रीयते जगद्विधानाय परमात्मना तस्मात् तपःशब्दितसंकल्पात्मकज्ञानमेव तदीयसर्जनादिव्यापार इत्यर्थः। ज्ञानिनाञ्च मुक्तानां परामृतं परमुत्कृष्टममृतममृतवदास्वाद्यं। भोग्यमितियावत्। ब्रह्मैवाक्षराख्यपरमपुरुष एवेत्यर्थः। हे सोम्य प्रियदर्शन एतदक्षराख्यं परं ब्रह्म गुहायां हृदयकुहरे निहितं वर्तमानम्। व्यापकत्वादन्तर्हृदये स्थितमित्येतत्। य उपासको वेद जानाति सोऽक्षरब्रह्मज्ञानवानुपासकोऽविद्याग्रन्थिमविद्याग्रन्थिरिवेत्यविद्याग्रन्थिस्ताम् ग्रन्थितुल्यां दृढतया दुःखेन पृथक् कर्तुमर्हामविद्या विकिरति विक्षिपति। इह अत्रैव लोके एतदक्षरपुरुषज्ञानरूपया विद्ययाऽविद्याऽस्य विनश्यतीति कर्मवीजमस्य दग्धतया न संसाराङ्कुरमारभते पुनरिति भावः ॥१०॥

इति भगवद्रामानन्दाचार्यप्रणीतानन्दभाष्योपेते द्वितीयमुण्डके

प्रथमः खण्डः ॥२॥१॥

—o—

## अथ द्वितीयमुण्डके द्वितीयः खण्डः

**आविः सन्निहितं गुहाचरं नाम महत्पदमत्रैतत्समर्पि-**

पूर्वत्र प्रतिपादितस्याक्षरपुरुषस्य परब्रह्मणो ज्ञानं येनोपायेन भवति तमुपायं प्रदर्शयति खण्डेऽस्मिन् । तस्यैवाक्षरस्य स्वरूपशोधनाय विशेषयति-आविरित्येतदव्ययमाविर्भूतार्थकम्। आविर्भूतमेतत् साक्षात्कारवतां योगिनाम् । तदीयप्रत्यक्षविषयभूतमित्येतत् । यद्वा आविः स्वप्रकाशम्। न तत्प्रकाशाय प्रकाशकान्तरापेक्षेतियावत् । सन्निहितं सर्ववस्तुषु सम्बद्ध-मित्यर्थ । गुहायां हृदयाभ्यन्तरे चरति वर्तत इति गुहाचरम् । अन्तरात्मतया सर्वप्राणिहार्दाकाशसंचारीत्यर्थः । नाम प्रसिद्धं श्रुतिस्मृतिषु गुहाचरत्वेन महत्पदरूपतया चेत्यर्थः । महत् सर्वत उत्कृष्टं पदं पद्यते गम्यत इति व्युत्पत्त्या प्राप्यम् । सर्वोत्कृष्टं प्राप्यमिदमेव सर्वेषामिति भावः । उक्तञ्चास्मदाचार्यपादैः श्रीराघवानन्दाचार्यैः परप्रतिप्रबोधे "साकेते परमप्राप्यः श्रीरामः सकलेश्वरः ।" इति । अस्य महत्पद-मित्येवंकथने हेतुर्वदति—अत्रास्मिन्नक्षराख्ये परमात्मनि एतत् सर्वमर्पितम्। अरा इव रथनाभौ सर्वमस्मिन् निःस्यूतमित्यर्थः । एतत्पदार्थमेव विवृणोति स्वयम्- एजत् प्राणत् निमिषच्च यत्। मध्यमणिन्यायेन प्राणत्पदमेजदित्यनेन निमिषदित्यनेन च सम्बध्यते । एजत् कम्पमानम् । चलदित्येतत्। प्राणत् प्राणभृत्। यत् प्राणभृत् पशुपक्ष्यादि चलत् तत्सर्वमस्मिन् समर्पित-मित्यर्थः । यत् प्राणभृत् निमिषन्निमेषव्यापारवन्मनुष्यपशुप्रभृति तदपि सर्वमस्मिन् समर्पितम् । चकाराद् यदन्यच्चलद्भिन्नमचलत् स्थावरं लतागुल्मवृक्षादिकं यच्च निमिषद्भिन्नं निमेषव्यापाररहितं देवादिकं तदपि सर्वमस्मिन् समर्पितम्। यच्चान्यत् प्राणभृतः तदप्यचेतनजातमस्मिन् समर्पितम्। एतेन चिदचित्स्वरूपं सर्वमेवात्र समर्पितम्। अतः सर्वाधार-भूतमेतत् । तस्मान्महत्पदमित्युच्यत इति भावः । एतत् सर्वाधारभूतमक्षरं ब्रह्म जानथ अवगच्छत हे शिष्याः श्रेयसे । एतज्ज्ञानमेव परमश्रेयः-साधनमिति हेतोरेतज्ज्ञानायैव यतध्वमिति भावः । एतदिति पुनर्विशि-

**तम् । एजत्प्राणन्निमिषच्च यदेतज्जानथ सदसद्वरेण्यं परं विज्ञानाद्यद्वरिष्ठं प्रजानाम् ॥ १ ॥**

**यदर्चिमद्यदणुभ्योऽणु च यस्मिल्लोका निहिता लोकि**

नष्टि–सदसद्वरेण्यम्। सत् स्थूलतया दृश्यमानं कार्यात्मकं वस्तु। असदिति सूक्ष्मस्वरूपं कारणात्मकं वस्तु। ताभ्यां सदसद्भ्यां स्थूलसूक्ष्मवस्तुभ्यामित्येतत्। वरेण्यं वरणीयं प्रार्थनीयं स्वाधाररूपतया स्थूलसूक्ष्मात्मककार्यकारणवस्तु-प्रार्थ्यमिदमेवेति भावः। पुनः कीदृशमित्यत्राह–परं विज्ञानात्। विज्ञान-शब्दोऽत्र जीववाची 'यो विज्ञाने तिष्ठान्नि'ति श्रुतेः। विज्ञानाज्जीवात् परं श्रेष्ठम्। इदमक्षरं ब्रह्म जीवापेक्षया श्रेष्ठमतो जीवभिन्नमित्यर्थः। हृदय-गुहावर्त्तित्वाज्जीव एवायमिति न भ्रमितव्यमितिभावः। यत् प्रजानां वरिष्ठं यदक्षरं ब्रह्म प्रजानां जीवानां वरिष्ठमतिशयेन प्रार्थ्यं यस्मादिदमेव परमं प्राप्यं परमं प्रापकञ्च, 'यमेवैष वृणुते तस्यैष आत्मा विवृणुते तनूं स्वामि'ति श्रुत्यन्तरोक्तेरिति भावः ॥१॥

एतज्जानथेत्यत्र ज्ञानमात्रं विहितमत्र मन्त्रे तज्ज्ञानं ध्यानरूपमिति व्य-ञ्जनया प्रतिपादयितुमाह-यदक्षरं ब्रह्म अर्चिमत्। अर्चिश्शब्दो मतुबन्तः। सलोपस्तु छान्दसः। अर्चिर्दीप्तिः तद्विशिष्टमर्चिमत्। दीप्तिश्च प्रकाश एव। 'यस्य भासा सर्वमिदं विभाती'तिश्रुत्यन्तरात्। प्रकाशैकरसस्य प्रकाशेन याचितमण्डनन्यायेनान्येषां प्रकाशवत्त्वं युक्तमेवेति भावः। अणुभ्यः सूक्ष्मेभ्यः श्यामाकादिभ्योऽपि अणु सूक्ष्मम्। सर्वतः सूक्ष्ममेतदिति भावः। यस्मि-न्नक्षरे परमात्मनि लोका भूर्भुवःस्वरादयश्चतुर्दश प्रसिद्धा एव। लोकिनस्तत्तल्लो-कनिवासिनो देवमनुष्यादयः तेषु वर्तमाना व्रीहियवादिपदार्थाश्च। इमे सर्वे-ऽपि निहिता अरा इव नाभौ समर्पिताः। सर्वाधारभूतमेतदिति भावः। तत् सर्वाश्रयभूतमेतदक्षरं ब्रह्मैवेत्यर्थः। स प्राणः प्राणवायुः तत् तदात्मक एव। उशब्दस्यावधारणार्थकस्यात्राप्यन्वयात्। तदु वाङ्मनः वागिति ज्ञान-कर्मेन्द्रियाणामुपलक्षणं मन इत्यान्तरेन्द्रियाणाम्। तथा च सर्वाणि बाह्यान्या-न्तराणि चेन्द्रियाणि तदात्मकान्येवेत्यर्थः। तदेतत्सत्यं तदेतदक्षरं ब्रह्म

**नश्च । तदेतक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि ॥ २ ॥**

**धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्दधीत । आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि ॥ ३ ॥**

सत्यं सत्यस्वरूपम् । नित्यमित्येतत् । अमृतमविनाशि यद्वाऽमृतममृतवदुपभोग्यं मुक्तिदशायामित्यर्थः । तद्वेद्धव्यं विद्धि हे सोम्य सोम इव दर्शनीयस्वरूप शिष्य । एतेनानुकम्पा शिष्ये व्यज्यते । तदक्षरं ब्रह्म वेद्धव्यं मनसा वेधनीयं शरेण लक्ष्यमिव समाहितेन मनसा वेधनीयम् । ज्ञातव्यं ध्यानगम्यमित्येतत् । विद्धि जानीहि । अस्मिन् ते मनः समाधानं कुरु यदि परमं श्रेयः कामयस इति भावः । अनेन ज्ञानस्य ध्यानरूपता व्यज्यत इति चिन्तनीयम् ॥२॥

तद्वेद्धव्यमित्युक्तम् । कः स वेधनप्रकार इति वक्तुमुपक्रमते–धनुर्गृहीत्वौपनिषदं । महास्त्रम् उपनिषत्सु प्रसिद्धमौपनिषदं महास्त्रम्–अस्यते क्षिप्यते बाणादिकमनेनेत्यस्त्रं महच्च तदस्त्रमिति महास्त्रमेवंभूतं धनुः प्रणवरूपं बाणासनं गृहीत्वाऽऽलम्ब्य 'एतदालम्बनं श्रेष्ठमि'त्यादिश्रुतेः । आदायेति यावत् । उपासा नैरन्तर्येण स्थूलसूक्ष्मशरीरान्तःकरणादिविलक्षणतयाऽऽत्मपरिचिन्तनं तया निशितं तीक्ष्णीकृतम् । परिसंस्कृतमित्येतत् । शरं प्रत्यगात्मलक्षणं बाणं सन्दधीत संदध्यात् । प्रणवाख्ये धनुषि प्रत्यगात्मस्वरूपं नियोजयेदिति भावः । ततश्च संधानानन्तरं तदात्मरूपशरविशिष्टं प्रणवाख्यं धनुरायम्य समाकृष्य भावगतेन चेतसा भावः प्रत्यगात्मपरमात्मनोः शेषशेषिभावविषयिणी भावना । तद्गतेन तादृशीं भावनां प्राप्तेन चेतसाऽन्तःकरणेन । चेतसः प्रणवरूपधनुःसमाकर्षणे करणतयान्वयो लौकिकधनुषः समाकर्षणे हस्तस्येव । प्रणवधनुषः समाकर्षणं चेतसा किंस्वरूपमितिचेज्जीवात्मपरमात्मनोः शेषशेषिभावरूपं स्वार्थं प्रणवः बोधयतीत्यनुसन्धानमेवेत्यवेहि । लक्ष्यं वेद्धव्यं तु तदेव पूर्वोक्तस्वरूपमेवाक्षरमक्षराख्यं परं ब्रह्मेति विद्धि जानीहि । हे सोम्य सोमवद् रमणीयशिष्येत्यर्थः ॥३॥

**प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।**
**अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ४ ॥**
**यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च**

पूर्वं सामान्यतो धनुः शर इत्युक्तम् । सम्प्रति नामतो निर्दिशति-प्रणवो-धनुरिति । प्रणव ओङ्कार एव धनुरिष्वासः । शरविक्षेपसाधनमित्येतत् । शर इषुरात्मा जीवः । धनुषा प्रक्षेप्यः शरो भवति । इह तु प्रणवेनालम्बनेन प्रत्यगात्मा परमात्मरूपलक्ष्यं प्रति नीयते तस्माद् धनुःकार्यकारित्वात् प्रणवो धनुष्ट्वेन रूपितः । शरस्तु नीयते धनुषा तद्वत् प्रत्यगात्मा नीयतेऽतः शरतुल्यतया उपासको जीवः शरत्वेन रूपितः । धनुःक्षिप्तः शरः लक्ष्यं विद्ध्वा लक्ष्यान्तर्गतो भवन् लक्ष्याभिन्न इव प्रतीयते तथा प्रणवप्रकाशितशेषशेषिभावरूपार्थानुसंधानात्मकं वेधं कृत्वा प्रत्यगात्मा स्वस्मिन् ब्रह्मात्मकत्वानुसंधानरूपतदन्तःप्रवेशवान् तदभिन्न इव प्रतीयतेऽतोऽक्षराख्यः परमात्मा लक्ष्यत्वेन रूपित इति भावः । तद् आविरित्यादिमंत्रेण पूर्ववर्णितं यदक्षरं तदक्षराख्यं ब्रह्मैव लक्ष्यं वेद्धव्यमित्युच्यते । अप्रमत्तेन परमात्मव्यतिरिक्तबाह्याभ्यन्तरवस्तुवासनारहितेन तदेवाग्रेणेति यावत् । मनसेति शेषः । प्रमादरहितमनसा करणेन प्रणवधनुःप्रक्षिप्तः प्रत्यागात्मशरो लक्ष्यवेधनाय समर्थो भवेदिति भावः । वेद्धव्यं शेषशेषिभावानुसंधानविषयीकर्त्तव्यमित्यर्थः । शरवत् तन्मयो भवेत् । लक्ष्ये प्रविष्टः शरो यथा तन्मयो लक्ष्यभिन्नतयाऽनवभासमानो भवति तथा परब्रह्मणि प्रणवधनुषा प्रापितः प्रत्यगात्मा परब्रह्मात्मकोऽहमित्यनुसंधानवान् परब्रह्मभिन्नतयानुसन्धानरहितो भवेदित्यर्थः । अक्षरार्थस्तु शरेण तुल्यं शरवत् तन्मयो लक्ष्यमयः परब्रह्ममयो भवेदिति । एवं समाधिमापन्नः परब्रह्मापेक्षया भेदजनकदेवमनुष्यत्वाद्याकारस्फुरणरहितो भवतीति भावः । एतदेव च तन्मयत्वशब्दार्थतात्पर्यम् ॥४॥

यस्मिन् अक्षराख्ये परमात्मनि । द्यौर्द्युलोकः । पृथिवी भूर्लोकः । अन्तरिक्षमन्तरिक्षलोकश्च ओतं प्रोतम् । सम्बद्धमित्येतत् । सर्वैः समग्रैः

**सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथा-**
**मृतस्यैष सेतुः ॥ ५ ॥**

**अरा इव रथनाभौ संहता यत्र नाड्यः स एषोन्तश्च-**
**रते बहुधा जायमानः । ओमित्येवं ध्यायथ आत्मानं स्वस्ति**
**वः पाराय तमसः परस्तात् ॥ ६ ॥**

सह
प्राणैः प्राणापानादिभिर्मुख्यप्राणैर्बाह्याभ्यन्तरेन्द्रियैश्चक्षुरादिभिश्च ।
सहितम् । मनश्च चित्तञ्च ओतम् । तमेव द्युलोकादिसर्वाश्रयीभूतो यस्तमेव
एकमद्वितीयम् । चिदचिच्छरीरकस्य परमात्मन एकस्यैव सत्त्वादेकमित्युक्तम् ।
आत्मानं पूर्वोक्तमक्षराख्यं परमपुरुषं जानथ जानीत हेशिष्याः । अन्या-
श्चिदचिच्छरीरकपरमात्मभिन्नविषया वाचो वाग्व्यवहारान् विमुञ्चथ
त्यजत । तत्र हेतुमाह–एष परमात्मा सर्वकारणतया सर्वाधारतया सर्वात्मत-
या च ज्ञातं सन्नमृतस्य अमृतत्वस्य । मुक्तेरित्येतत् । सेतुः प्रापकोऽस्तीति-
शेषः । लोके नदीप्रभृतिसेतुः परतीरप्रापको यथा भवति तथा
सर्वाधारत्वादिनाऽनुसंहितः परमात्मा संसाराम्भोनिधेः परतीरप्रापक इति
सेतुत्वेन रूपित इति भावः ॥५॥

अरा इव यथा रथनाभौ रथसम्बधिचक्रमध्यगते स्थूले काष्ठ-
विशेषे अराः संहताः सम्बद्धा भवन्ति तथा यत्र यस्मिन् हृदयप्रदेशे
सर्वशरीरव्यापिका नाड्यः शिराः संहताः समर्पिताः सन्ति तत्र
हृदयप्रदेशे अन्तर्मध्ये । हार्दाकाश इत्येतत् । स एष स प्रकृत एषोऽक्ष-
राख्यः परमपुरुषो बहुधा बहुरूपैर्जायमानोऽजायमानोऽपि उपासनाय
प्रतिप्राणिहृदयं परमात्मा भिन्नभिन्नवेषं विधाय चरते । वर्तत इत्यर्थः ।
'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति इति' भगवदुक्तेः । तद्वेषेणेव स सर्व-
प्राणिनियमनमपि कुरुते । आत्मानं तादृशं परमात्मानम् ओमित्येवं ध्या-
यत । ओङ्कारमालम्ब्य पूर्वोक्तरीत्या तस्य ध्यानं कुरुतेत्यर्थः । ध्यानफल-
माह–तमसः परस्तात् पाराय । तमसः प्रकृतिमण्डलस्य संसारस्येतियावत् ।
परस्ताद् बहिर्वर्तमानाय पाराय परतीराय प्राप्यभूताय । तमःपारभूत-
परमात्मप्राप्तये एव परमात्मध्यानमोङ्कारालम्बनेन कुरुतेति भावः । वः प्रण-
वालम्बनेनाक्षरपुरुषध्यानपरेभ्यो युष्मभ्यं स्वस्ति कल्याणं भवतु ॥६॥

**यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः । मनोमयः प्राणशरीरनेता**

तमसः परस्ताद् वर्त्तमानः प्राप्यभूतः परमात्मा ध्येयतया पूर्वमुक्तः स एव विशेषणैः पुनः प्रतिपाद्यते—दुर्विज्ञेयस्य पुनः पुनः प्रतिपादनं हि सुखावगमसाधनमिति मत्वा आह—य इति । यः परमात्मा सर्वज्ञः सामान्यरूपेण सर्वविषयकज्ञानवान् सर्ववित् विशेषरूपेण तत्तद्वस्त्वसाधारणधर्मेण सर्ववस्तुविषयकज्ञानवांश्चास्ति । यस्य परमपुरुषस्य एष दृश्यमानश्चन्द्रसूर्ययोस्तच्छासनानतिलंघिनियतपरिभ्रमणं सागरस्य स्वमर्यादानतिक्रमणं पवनतपनादीनां स्वस्वव्यापारपरायणत्वं तच्छासनादेव कर्मतत्फलादीनां स्वदेशकालानतिक्रमेण प्रवर्तमानत्वमित्यादिरूपो महिमा लीलाविभूतिर्भुवि वर्तत इति शेषः । स एष एवंमहिमाविशिष्ट आत्मा परमपुरुषो हि निश्चयेन व्योम्नि अप्राकृताकाशे दिव्ये परमे ब्रह्मणः पुरं ब्रह्मपुरं तस्मिन् ब्रह्मपुरे साकेताख्ये दिव्ये धाम्नि प्रतिष्ठितो दिव्यमूर्त्या वर्तत इत्यर्थः । स एव हि मनोमयः संकल्पमयः संकल्पमात्रेणैवास्य प्रतिप्राणिहृदयगुहाप्रवेशः । न तु जीवात्मवत् कर्मवशेनेति भावः । प्राणशरीरनेता प्राणो मुख्यप्राणः सर्वेन्द्रियाणि च शरीरञ्चान्नपरिणामभूतं शिरःपाण्यादिलक्षणं तयोर्नेता नायकोऽधिष्ठाता यद्वा शरीरपदेन सूक्ष्मं शरीरमुच्यते प्राणशब्देन च जीवनवान् जीवात्मा । प्राणशरीरयोर्जीवात्मसूक्ष्मशरीरयोर्नेता एकस्माद् देहाद् देहान्तरं प्रति प्रापकः परमात्मप्रेरणयैव शरीरान्तरं प्रति गमनभावात् । अन्ने अन्नमये अन्नपरिणामभूतेऽन्नशरीरे प्रतिष्ठितो वर्तत इति शेषः । साकेताख्यदिव्यधामप्रतिष्ठितोऽपि परमपुरुषः श्रीरामः स्वसंकल्पमात्रेण प्रतिजीवशरीरं प्रतिष्ठित आस्ते । रूपविशेषेण युक्तः सन्निति भावः । तस्मिन् हृदयगुहान्तर्वर्तमाने परमात्मनि हृदयं मनोऽन्तःकरणमित्येतत् । सन्निधाय निवेश्य तद्ध्यानपरो भूत्वेत्येतत् । धीरा विवेकिनो विज्ञानेन साक्षात्काररूपेण तदक्षरं परमपुरुषमिति यावत् । परिपश्यन्ति परि परितः सर्वतः । पूर्णतयेति यावत् । पश्यन्ति उपलभन्ते । तत्कीदृशमित्यत्राह-यदक्षरं ब्रह्म आनन्दरूपमनवधिकातिशयसुखात्मकम् ।

**प्रतिष्ठितोऽन्ने हृदयं सन्निधाय । तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति ॥ ७ ॥**

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे ॥ ८ ॥**

**हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्र**

अमृतमविनाशि संसारलेपवर्जितमिति वा विभाति प्रकाशते । हृदयगुहाशयमेवाक्षरं ब्रह्म धीरा ध्यानरूपोपासनद्वारा ऽमृतत्वानन्दरूपतया प्रकाशमानं पूर्णतया साक्षात्कुर्वन्तीत्यर्थः ॥७॥

परमात्मसाक्षात्कारस्य फलमभिधत्तेऽनेन मंत्रेण—भिद्यत इति । भिद्यते भेदं विनाशं गच्छति । हृदयग्रन्थिर्हृदयस्यान्तःकरणस्य ग्रन्थिः ग्रन्थिवद् दुःखेनापनेयतया ग्रन्थिर्वासना । सा चानादिकालतोऽनुवर्तमाना दृढमूला दुर्मोचतया ग्रन्थिभावमापन्ना परमात्मसाक्षात्कारेण विनश्यतीत्यर्थः । सर्वसंशयाः सर्वे च ते संशयाः । संशयपदमन्यथाज्ञानविपरीतज्ञानानामप्युपलक्षणम् । परमात्मनि सकलचिदचिच्छरीरके सकलोपादानकारणे विज्ञाने विज्ञातुरुपासकस्यापि सर्वविषयकविज्ञानस्य सामान्यतो विशेषतश्च जातत्वात् संशयान्यथाज्ञानविपरीतज्ञानानि छिद्यन्ते विनश्यन्तीत्यर्थः । अस्य विज्ञातुरुपासकस्य कर्माणि सवानर्थमूलभूतानि अनादिजन्मपरम्परया सञ्चितानि यानि तान्यपि क्षीयन्ते दग्धबीजवत् स्वफलप्रदानाऽसमर्थानि भवन्ति । क्रियमाणानि तु तान्यश्लिष्टानि भवन्ति प्रारब्धानि केवलं तिष्ठन्ति । यावद् भोगसमाप्तिर्न भवति तावत्कालं प्रारब्धानि तिष्ठन्तीति भावः । एतत्सर्वं यदा भवति तं कालमुपदिशति तस्मिन् दृष्ट इति । परावरे परे इतरे अवरे न्यूना यस्मात्तत् परावरं सर्वतः समुत्कृष्टं तस्मिन् अक्षराख्ये परब्रह्माणि दृष्टे साक्षात्कारविषये सति । यदा स्वेतरसमस्तवस्तुसमुत्कृष्टोऽक्षराख्यः परमपुरुषः साक्षत्कृतो भवति पूर्वोक्तरीत्या वासनासंशयप्राक्तनप्रारब्धातिरिक्तकर्मणामात्यन्तिकक्षयो भवतीति भावः ॥८॥

उक्तमेवार्थमतः परं त्रिभिर्मन्त्रैः संक्षेपतो बोधयति बोधस्थिरतासम्पादनाय—हिरण्मये इति । हिरण्मये ज्योतिर्मये । स्वप्रकाश इत्येतत् ।

**ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥ ९ ॥**

**न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भाति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १० ॥**

परे सर्वतः समुत्कृष्टे कोशे कोशवदवस्थितेऽप्राकृते देशविशेषे । साकेत इति यावत्। विरजं गुणत्रयसम्पर्कशून्यम्। छान्दसमदन्तत्वम्। निष्कलमवयवरहितम्। विकारशून्यमित्येतत्। ब्रह्म स्वरूपतो गुणतश्च सर्वातिशायिबृहत्त्वशालि परमात्मतत्त्वं वर्तत इति शेषः। तद् ब्रह्म शुभ्रं सकलदोषापेतत्वात् स्वच्छम्। ज्योतिषां प्रकाशकानां सूर्यादीनामिन्द्रियाणाञ्च ज्योतिः प्रकाशकम्। ईदृशं यद् वस्तु तदात्मविदो ब्रह्मसाक्षात्कारवन्तो-विवेकिन एव विदुर्जानन्ति। न प्राकृता जना रजोमलसम्बन्धवन्तो वेत्तु-मर्हन्तीति भावः ॥९॥

पूर्वमन्त्रे ज्योतिषां ज्योतिरित्युक्तं तदेव प्रपञ्च्य सुज्ञानाय प्रदर्शयति। तत्र तस्मिन् परब्रह्मणि भासमाने सूर्यो भासकत्वेन प्रसिद्ध आदित्यो न भाति न प्रकाशते। तदीयप्रकाशेनाभिभूतप्रकाशत्वान्न सूर्यो भातुं समर्थो भवति। दिवा सौरेण साऽभिभूतभासस्तारा यथा न भान्ति तद्वदित्यर्थः। न चन्द्रतारकं चन्द्रश्च ताराश्चेति चन्द्रतारकम्—ताराधिपतिश्चन्द्रस्ताराश्च तस्मिन् भासमाने न भातुं शक्नुवते। इमा दीप्तिशालितया प्रसिद्धा विद्युतः तडितोऽपि न भान्ति। अयं प्रत्यक्षगोचरोऽल्पप्रकाशोऽग्निः। भौमं तेज इत्यर्थः। कुतो नैव केनापि प्रकारेण भातीत्यर्थः। सर्वेषु प्रकाशकेषु श्रेष्ठतया प्रसिद्धः सूर्योऽप्यभिभूततेजस्तया यदि भातुमसमर्थस्तदा चन्द्रादीनां का कथा? ब्रह्मप्रकाशसविधे भासमानता का इति भावः। ननु परमात्मा निरतिशयप्रकाशः सदैव, व्यापकश्च सर्वत्र, तदा कुत्रापि कदापि सूर्यादयो न भासेरन्। दृश्यन्ते च भासमाना इति कथमित्यत्राह तमेव भान्तमनुभाति सर्वम्। सर्वं सूर्यादिकं भासकजातं भान्तं भासमानं तं परमात्मानमेव अनु पश्चाद् भाति प्रकाशते। तत्र हेतुमाह—तस्य भासा सर्वमिदं विभाति। तस्य परमात्मनो भासा दीप्त्या परमात्मदत्तया तत्सम्बन्धिन्यैव भासेति यावत्।

सर्वमिदं यत्किञ्चिद् दृश्यमानं भासकं वस्तु सूर्यचन्द्रादिकं विभाति। यथोल्मुकादिकं वह्निसंयोगाद् वह्निसम्बन्धिन्यैव भासा भासयति पदार्थान्तरं न स्वभासा। तस्य स्वकीयभासोऽभावात् तथैव सूर्यादिकमपि परमात्मदत्तभासैव जगद् भासयति। न हि स्वकीयाऽस्य भा अस्तीति भावः। स्मृतिश्च तथाऽह—यदादित्यगतं तेजो जगद् भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमिति ॥१०॥

**ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण। अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ ११ ॥**

इति द्वितीयमुण्डके द्वितीयः खण्डः ॥२।२॥

---

सर्वस्य जगतो ब्रह्मात्मकत्वं प्रदर्शयन्नुपसंहरति। पुरस्तादग्रे दृश्यमानमदृश्यमानं वा यत् किञ्चिदस्ति तत्सर्वममृतमविनाशि ब्रह्मैव अमृतस्वरूपब्रह्मात्मकमेवास्ति। पश्चात् पृष्ठभावे पश्चिमदिशि यद् वस्तु तदपि सर्वं ब्रह्मैव ब्रह्मात्मकमेव। दक्षिणतो दक्षिणस्यां दिशि, उत्तरेण च उत्तरस्यां दिशि च यत् किमपि विद्यते तदपि सर्वं ब्रह्मैव ब्रह्मात्मकमेव। अधोऽधो दिशि ऊर्ध्वमूर्ध्वदिशि च। उपर्यधःप्रदेशयोरिति यावत्। प्रसृतं व्याप्तं यद् यद् वर्तते तत्सर्वमपि ब्रह्म ब्रह्मात्मकमेव। तस्मादिदं विश्वं जगत् समस्तमपि ब्रह्म ब्रह्मात्मकमेव सर्वात्मभूतमिदं ब्रह्म वरिष्टं वरणीयतमम्, परमानन्दरूपत्वात् परमप्राप्यत्वाच्च सर्वेषां वरीतुं योग्यमतिशयेनेति भावः ॥११॥

इति भगवद्रामानन्दाचार्यविरचिते मुण्डकोपनिषद आनन्दभाष्ये द्वितीयमुण्डके द्वितीयः खण्डः ॥२॥२॥

---

## अथ तृतीयमुण्डके प्रथमः खण्डः

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥१॥**

सर्वशरीरप्रविष्टं यदि परंब्रह्म तदा तस्यापि जीववद् भोक्तृत्वमापद्येतेति शंकां निरस्यन् प्रणवो धनुरित्यत्र प्रोक्तेऽक्षरब्रह्मणः परविद्यागम्यस्योपायभूते योगे सहकारिणमुपायं सत्यादिरूपं बोधयितुमाह—द्वा सुपर्णा इति । द्वेत्यादौ पदत्रये प्रथमाद्विवचनस्यौकारस्याकारभावश्छान्दसः । द्वा द्वित्वसंख्याकौ सुपर्णा सुपर्णसदृशौ सुपर्णस्तु पक्षी काकहंसादिस्तत्सादृश्यं परमात्मन एक वृक्षाश्रयणवत्त्वात् । संकल्पशक्तिभ्यां परमात्मनः शरीरेऽनुप्रवेशः कर्मज्ञानाभ्यां च जीवस्येति तयोरेव पर्णत्वमारोपितं देशाद्देशान्तरप्राप्तिसाधनत्वात् । सयुजा सह युक्तः इति सयुजौ सर्वदा सह योगवन्तौ । शरीरे हि सहयोगो भवति जीवपरमात्मनोः । एकस्य नियम्यतयाऽपरस्य च नियामकतया एकत्र वर्तमानत्वात् । सखायौ अपहतपाप्मत्वादयो हि गुणाः स्वाभाविकास्तयोः समाना अतः तादृशगुणैः सखित्वमनयोः कल्प्यते तेन सखिभावमापन्नावित्यर्थः । एकत्र सहवासतो वा सखायौ । समानमेकं वृक्षं शरीरम् । ओव्रश्चू छेदन इति धातोर्निष्पन्नो वृक्षशब्दः छेदनयोग्यो भवति शरीरमपि तादृशगुणयोगीति वृक्षत्वेन रूपितम् । परिषस्वजाते परिष्वक्तन्तौ समाश्रितवन्तावित्येतत् । पक्षिणावपि फलभक्षणाय वृक्षमेकं समाश्रयतः तद्वज्जीवात्मपरमात्मानावपि शरीरमेकं कर्मभोगाय समाश्रितवन्ताविति भावः । किन्तत्र द्वावपि तौ पक्षिवत् फलभोगपरायणाविति शंकायामाह—तयोरन्यः तयोर्जीवपरमात्मनोरन्यः परमात्मापेक्षया भिन्नः । कर्मवश्यो जीवात्मेत्यर्थः । स्वादु नानाविधस्वादविशिष्टं पिप्पलं कर्मफलं सुखदुःखात्मकम् । सुखदुःखयोर्वैविध्येन नानास्वादविशिष्टत्वं युक्तमेव । अत्ति भुंक्ते । अन्यः कर्मफलभोक्तुर्जीवाद् भिन्नोऽकर्मवश्यः स्वसंकल्पशक्तियोगान्नियामकतया शरीरमनुप्रविष्टः परमात्मा । अनश्नन् कर्मफलमभुञ्जान एव । अभिचाकशीति अभितः प्रकाशते प्रसन्न एव भवति । यद्वा अभिचाकशीति प्रेरयति कर्मफलभोगाय स्वकीयं सखायं यतः स एव नियामकः सर्वस्य । धातूनामनेकार्थत्वात् प्रेरणार्थः शक्यसंभवः । अत्र तयोरन्योऽनश्नन्नन्यः इत्युभयथा जीवपरमात्मनोर्भेदः प्रदर्शितः तेन जीवः परमात्मापेक्षयाऽत्यन्तं भिन्न इति दृढीक्रियते तस्मात्पराभ्युपगतं जीवब्रह्मणोरैक्यं निरस्तं वेदितव्यम् ॥१॥

**समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।**
**जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥२॥**

**यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्म-**

समाने एकस्मिन् । वृक्षे वृक्षत्वेन रूपिते शरीरे । निमग्नो देहे तादात्म्यभावमुपगतः स्थूलोऽहं कृशोऽहमित्यादिबुद्धिविशिष्टः । पुरुषः पुरि शरीरे शेते इति पुरुषो भोक्ता जीवः । अनीशया न ईष्टे इत्यनीशा माया तया मुह्यमानः स्वस्वरूपे देवत्वमनुष्यत्वादिबुद्धिमुपगतोऽविवेकीति-यावत् । शोचति सन्तापमेति । मम पुत्रो विनष्टो भार्या मे विकला, धनं मेऽपहृतं लुण्टाकेन, किमिदानीं कुर्यामित्येवं नानाप्रकारां चिन्तामापद्यत इति भावः । यदाऽनेकजन्मोपार्जितपुण्यपरिपाकवशात् परमकारुणिकस्य कस्याप्याचार्यस्य सम्पर्कमेति तदुपदेशतश्च सर्वनियामकत्वसर्वशेषित्वानवधिकातिशयकल्याणगुणगणाकरत्वकरुणामहोदधित्वादिधर्मैः स्वविलक्षणं चिदचिच्छरीरकमन्यं जीवापेक्षयाऽत्यन्तभिन्नमीशं परमात्मानं जुष्टं स्वकर्मभिः प्रसन्नतां गतमाचार्योपदिष्टेन प्रणवो धनुरित्युपायेन सेवितं वा । जुषीप्रीतिसेवनयोरितिधातुः । ईशं परमात्मानमस्य परमेश्वरस्य महिमानं माहात्म्यं "यः सर्वज्ञः सर्वविद् यस्यैष महिमा भुवी"ति श्रुतिप्रोक्तं सर्वप्रपञ्चज्ञातृत्वसर्वान्तर्यामित्वादिकञ्च पश्यति साक्षात्करोति । इति एतस्मात् कारणात् परमात्मनः तदीयमहिम्नश्च साक्षात्काररूपाद् वीतशोको भवति पूर्वोक्तचिन्ताभिः पुत्रभार्यादिवैकल्यप्रयुक्ताभिर्विमुक्तो भवति । सर्वबन्धविनिर्मुक्तो भवतीति भावः ॥२॥

पूर्वं वीतशोको भवतीत्युक्तम् । मुक्तिदशायां जीवस्वरूपं कीदृशं भवतीति शंका तिष्ठत्येव तां निराकरोति—यदा यस्मिन् काले पश्यतीति पश्यो द्रष्टा जीवो रुक्मवर्णं रुक्मस्य सुवर्णस्येव वर्णो दीप्तिः सदैकरूपा यस्य तं तथा एषोऽन्तरादित्ये हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्वसुवर्णः इत्यादि श्रुतिप्रतिपादितदेदीप्यमानविग्रहविशिष्टम् । कर्तारं निमित्तकारणम् ।

**योनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥३॥**

**प्राणो ह्येष यः सर्वभूतैर्विभाति विजानन् विद्वान् भवते**

योनिमुपादानभूतं विश्वस्य । ईशम् ईष्ट इति ईट् तम् सर्वनियन्तारं पुरुषं निरुपाधिकपुरुषशब्दवाच्यं परमात्मानम् । ब्रह्म स्वरूपतो गुणतश्च सर्वतो बृहत्वाद् ब्रह्मस्वरूपम् । पश्यति साक्षात्कुरुते गुरूपदिष्टमार्गेण तदा साक्षात्कारानन्तरम् । विद्वान् ब्रह्मस्वरूपज्ञानवान् स उपासकः । पुण्यपापे शुभाशुभकर्मणी जन्मपरम्परासञ्चिते विधूय अश्व इव रोमाणि कम्पयित्वा दूरीकृत्य पूर्वोत्तराघविश्लेषाऽश्लेषविशिष्टो भूत्वा निरञ्जनो निर्गतसमूलवासनालेपः सन् । परमंसाम्यमपहतपाप्मत्वसत्यकामत्वसत्यसंकल्पत्वादिगुणाविर्भावात् परमात्मना सह साम्यविशेषम् । उपैति प्राप्नोति । एतेन साम्यलक्षणैव मुक्तिरौपनिषदीति स्पष्टीकृतं भवति । ब्रह्मयोनिमित्यत्र समस्तपदपक्षे तु ब्रह्मणोऽव्याकृतस्य योनिरुपादानमित्यर्थो बोध्यः । साम्यप्रतिपादनान्मुक्तिकालेऽपि जीवब्रह्मणोर्भेदः सूचितो भवतीति ध्येयम् ॥३॥

प्राणः परमात्मा स हि मुख्यप्राणस्यापि प्राणो जीवनसाधनम् । श्रुतिश्च भवति 'प्राणस्य प्राण" इति । अन्येषामपि जीवनसाधनं मुख्यतया स एव "सर्वाणि ह वा भूतानि प्राणादेवाभ्युज्जिहन्ति" इति श्रुतेस्तस्मात् परमात्मैवात्र प्राणो ग्राह्यः । एषः सर्वान्तरात्माऽक्षरपुरुषः । यः सर्वभूतैर्विभाति कायाकारपरिणतानब्रह्मस्तम्बेषु सर्वभूतेषु विद्यमानत्वेन तत्र जीववदनिमग्नत्वेन तैः सर्वैर्भूतैरुपलक्षितो विभाति विशेषतः प्रकाशते । उपलक्षणार्थकतृतीयाश्रुतेः । एवं भूतं सर्वभूतोपलक्षितं प्राणं विजानन् विविच्य सर्वात्मभूततया जानन् श्रवणमननद्वारा तदीयज्ञानवान् पुरुषो निदिध्यासनद्वारा विद्वान् तदीयसाक्षात्काररूपज्ञानवान् भवते भवति । य एवं सर्वात्मभूतप्राणसाक्षात्कारकर्ता पुरुषः सोऽअतिवादी न भवति । अतीत्यान्यथासन्तमर्थमन्यथा कृत्वा वदति सोऽतिवादीत्युच्यते । सर्वात्मभूतपुरुषज्ञानविधुरः शरीरं तदतिरिक्तकर्तृभोक्तृरूपमेव

**नातिवादी । आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ॥४॥**

वात्मानं मन्यमानः "ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी । कोऽन्योऽस्ति सदृशो मयेत्याद्यनुसारेण सर्वानतीत्य वदति स्वात्मानमेव विद्वांस्तु परमेश्वरेणाधिष्ठितान् सर्वान् जानन् स्वस्मिन् स्वातन्त्र्यभ्रमरहितः परमात्मायत्ततानुभववान् कथमतिवदेत् तस्माद् विद्वान् नातिवादी भवतीति भावः । यद्वा विद्वान् भव तेनातिवादी इत्यत्र एवं भूतं परमपुरुषं विद्वान् तेन परमपुरुषेण निमित्तेन अतिवादी भवेत्येवं योजना कार्या । तेनेत्यत्र हेत्वर्थे तृतीया । भवेति लोटो मध्यमः पुरुषः । अतीत्य सर्वान् परमात्मव्यतिरिक्तान् अतिक्रम्य वदति यः सोऽतिवादीत्यर्थः । सर्वातिशायित्वं परमात्मनो वदतीति भावः । स एव सर्वोत्कृष्टः परमप्राप्यश्चेत्यतिवदने हेतुताऽस्य सिद्धा भवति । "एष तु अतिवदति यः सत्येनातिवदति" इति छान्दोग्यश्रुतिश्चास्मिन्नर्थेऽनुकूला भवति । अयं परमपुरुषात्मकतां सर्वत्रानुभवन् आत्मक्रीड आत्मनि क्रीडा यस्य तादृश आत्मा हि सर्वस्य परमपुरुष एव प्राणशब्दोदितस्तत्रैव क्रीडते न बाह्येषूद्यानादिषु पुत्रदारादिषु च तथा आत्मरतिरात्मन्येव रतिर्यस्य तादृशो भवति । अथ विद्वान् बाह्येषु स्रक्चन्दनादिषु न रमते किन्तु परमात्मन्येव रमते । यद्यपि क्रीडा रतिश्चेत्युभयमपि प्रीतिरूपतया एकमेव वस्तु तथापि साधनभेदाद् भेदेन कथितम् । एष एवंविद्वानेव क्रियावान् फलानुसन्धानराहित्येन क्रियानुष्ठानकर्तृत्वात् । अविद्वाँस्तु वैराग्यादिविहीनतया अर्थकामपरतया फलमाकांक्षमाण एव श्रौताः स्मार्त्ताश्च क्रिया अनुतिष्ठति तत्फलमप्यन्तवत्त्वादफलमेवेति न स क्रियावानिति भावः । एष ब्रह्मविदां वरिष्ठो य एवं विद्वान् आत्मक्रीड आत्मरतिश्च भवति । एष एव ब्रह्मविदां ब्रह्मज्ञानिनां मध्ये वरिष्ठः सर्वतः श्रेष्ठोऽस्ति । श्रवणमननाभ्यामपि भवत्येव ब्रह्मवित्त्वं परन्तु न तद् वरिष्ठताप्रयोजकम् । सर्वात्मभूतप्राणशब्दोदितपरमपुरुषसाक्षात्कारशाली तु वरिष्ठताप्रयोजकस्तादृशविद्वत्त्वात्मक्रीडत्वात्मरतित्वधर्माश्रयत्वाद् वरिष्ठभवनार्ह इति भावः ॥४॥

સમરીતિર્મહાતેજાઃ પરબ્રહ્મ સનાતનઃ।
જયતાજ્જગન્નાથો વેદવેદ્યો મહામતિઃ॥

सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् । अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥५॥

सत्यमेव जयति नानृतं सत्येन पन्था विततो देव-

धनुर्गृहीत्वौपनिषदं महास्त्रमिति प्रधानोपायः प्रदर्शितः पूर्वमक्षरब्रह्मसाक्षात्कारे सम्प्रति तत्सहकारिभूतान् हेतून् निर्दिशति–सत्येनेति । एष प्रस्तुत आत्मा अक्षरत्वेन कथितः सत्येनानृतवचनपरित्यागात्मना प्राणिहितानुबन्धियथादृष्टार्थवदनरूपेण वा लभ्यः प्राप्तव्यः । प्राप्तिश्च एतन्मंत्रोक्तसहकारिसहकृतप्रणवालम्बनोपासनद्वारेति ध्येयम् । तपसा बाह्याभ्यन्तरकरणैकाग्रतालक्षणेन लभ्यः । 'मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः' इति स्मृतेः । सम्यग्ज्ञानेन गुरूपदेशद्वारा उपनिषद्वाक्यजन्यसंदेहविपर्ययादिरहितेन परमात्मविषयकज्ञानेन । नित्यं सर्वदा । इदञ्च मध्यमणिन्यायेन देहलीदीपकन्यायेन वा सत्यतपोभ्यामप्यन्वेति । ब्रह्मचर्येण अष्टविधमैथुनपरित्यागलक्षणेन च लभ्य इत्यनेनान्वयः । एषोऽन्तःशरीरे शरीरमध्ये हृदयकमलाकाशे । ज्योतिर्मयः स्वप्रकाशज्ञानस्वरूपः । अत एव शुभ्रः शोकविवेकादिमलशून्यः । हि निश्चयेन । वर्तत इति । शेषः । यमिमं परमात्मानम् । क्षीणः प्रणष्टः सवासनरागादिदोषसन्दोहो येषां तादृशाः । यतय इन्द्रियनियमनशीलाः । जितेन्द्रिया इत्येतत् । पश्यन्ति साक्षात्कुर्वन्ति । नित्यमित्यनेन कदाचिद् क्रियमाणैः सत्यादिभिरुपकरणैः सहकृतोऽपि मुख्योपायः प्रणवालम्बनोपासनरूपः परमपुरुषसाक्षात्कारसम्पादनाय समर्थो भवतीति गम्यते तेन सत्यादीनां स्तुतिरवश्याचरणीयत्वाय कृता भवति ॥५॥

सम्प्रति सत्यमेव स्तौति–सत्यमेव जयतीति । सत्यमेव भूतहितयथार्थवदनमेव जयति जयसाधनं भवति । जयो न सत्यवचनधर्मः किन्तु सत्यवादिपुरुषधर्मः । एवमनृतस्य धर्मः पराजयो नास्ति किन्तु अनृतवादिपुरुषधर्म एव सः । अतः वक्तृनिष्ठजयसाधनतया सत्ये उपचाराज्ज-

**यानः । येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत् सत्यस्य परं निधानम् ॥६॥**

**बृहच्च तद् दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं**

जिधातुप्रयोगः । नानृतमसत्यभाषणं न जयति जयसाधनं न भवति किन्तु पराजयसाधनमेव भवति । विततो विस्तृतो देवयानो देवयानाख्यः शास्त्रप्रसिद्धः पन्था मार्गविशेषः 'अर्चिःशुक्ल' इत्यादिना प्रोक्तः सत्येन सत्यवचनेन भवति । सत्यवादिनैव स पन्थाः प्राप्यत इत्यर्थः । स पन्थाः कीदृश इत्यत्राह—येन देवयानाख्येन पथा । आप्तकामा आप्तो लब्धः समस्तः कामो मनोरथो यैस्तादृशाः । लब्धसकलकामतया तृष्णाविरहिता इत्यर्थः । एवंभूता ऋषयोऽतीन्द्रियपरमात्मतत्त्वसाक्षात्कारवन्त आक्रामन्ति गच्छन्ति । प्राप्नुवन्तीत्येतत् । यदाक्रामन्ति तत् किमित्यत्राह—यत्र यस्मिन् अप्राकृते देशविशेषे साकेताभिधाने सत्यस्य सत्यवदनस्य सम्बन्धि परममुत्कृष्टं निधानं मूर्तिमत् परंब्रह्म श्रीसीतानाथस्वरूपेण परमप्राप्यभूतेन वर्तते तत्स्थानमाक्रामन्ति देवयानेन पथा त आप्तकामा ऋषय इति योजना ॥६॥

पूर्वोक्तं परमं निधानमेव विशिनष्टि—बृहदिति । तत् सत्यसाध्यं परमं निधानम् । बृहत् स्वरूपेण गुणैश्च सर्वतो महत् । अनवधिकातिशयबृहत्त्वयोगीत्यर्थः । दिवि भवं दिव्यम् । हार्दे परमाकाशे वर्तत इत्यर्थः । अप्राकृतदेशवर्तिनोऽपि व्यापकस्य परमात्मन उपास्यत्वाय नियमनाय च सर्वप्राणिहृदयाकाशे वेषविशेषेण वर्तमानताऽस्तीति भावः । अचिन्त्यरूपमचिन्त्यमप्रतर्क्यं रूपं यस्य तादृशम् । तत्र हेतुमाह—तच्च सूक्ष्मादचेतनवर्गेषु प्रवेशयोग्यतया तदपेक्षया सूक्ष्मश्चेतनस्तस्मादपि सूक्ष्मतरम् । निरतिशयसूक्ष्मताशालीत्यर्थः । चेतनेष्वप्यस्यान्तःप्रविष्टत्वादिति भावः । एवं रूपेण विभाति विशेषेण भासते । दूराद् विप्रकृष्टाद्देशाद् । दूरतरेऽतिविप्रकृष्टे देशे प्रकृतिपरभूते परमपदे स वर्त्तते । तत् परंब्रह्म अन्तिके समीपे प्रकृत्यन्तर्गत आदित्यमण्डले च वर्तते । तथा पश्यत्सु ब्रह्मसाक्षात्कर्तृषु । विषयसप्तमी । इह शरीरे गुहायां हृदयाकाशे निहितं

**विभाति । दूरात् सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम् ॥७॥**

**न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥८॥**

**एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा**

सन्निहितं वर्तते । ये पश्यन्ति परमात्मतत्त्वं तेषां कृतेऽतिसन्निहितं ये न पश्यन्त्यज्ञानिनस्तेषां कृते त्वत्यन्तविप्रकृष्टमिति भावः ॥७॥

परमात्मनः प्रत्यक्षसाधनमपरमपि ज्ञानप्रसादरूपमुपवर्णयति—चक्षुषेति । स परमात्मा चक्षुषा न गृह्यते तस्य प्राकृतवस्तुविषयतया सृष्टत्वात् । वाचा वागिन्द्रियेणापि स नोच्यते तस्यापि प्राकृतवाग्विषयत्वात् परमात्माभिधानासमर्थत्वात् । नान्यैर्देवैर्देवा इन्द्रियाणि तैरपरैरपीन्द्रियैः त्वगादिभिर्हस्तादिभिश्च नायं गृह्यते विषयीक्रियते । तपसा कायशोषणात्मकेन कृच्छ्रचान्द्रायणादिना । कर्मणा प्रसिद्धवैभवेनाश्वमेधादिना वैदिकेन स्मार्त्तेन च कर्मणा वाऽयं परमात्मा न गृह्यत इत्यन्वयः । तपः कर्म वा नास्य साक्षात्कारे साधनमित्यर्थः । ज्ञानप्रसादेन ज्ञानं परमात्मा तत एव सर्वज्ञानप्रसरात् । तस्य प्रसादः प्रसन्नता तेन परमात्माऽनुग्रहेणेत्यर्थः । विशुद्धसत्वो विशुद्धं रागद्वेषादिमलसम्बन्धरहितं सत्वमन्तःकरणं यस्य तादृशः । निष्कलं निर्गताः कला अवयवा यतः । निरवयवमित्येतत । तं परमात्मानं ध्यायमानो ध्यानविषयं कुर्वाणः । ततः परमात्मानुग्रहवशाद्विशुद्धान्तःकरणः तत्साक्षात्कारयोग्यतापन्नहृदयः सन् पश्यते साक्षात्करोति तमित्यर्थः ॥८॥

विशुद्धसत्वो यमात्मानं पश्यति स एव आत्मा । परमात्मेत्यर्थः । अणुः सर्वतः सूक्ष्मोऽणोरणीयानिति श्रुतेः । चेतसा विशुद्धेन । रागादिदोषसम्पर्कशून्येनेति यावत् । चेतसा मनसा वेदितव्यः साक्षात्कार्यः । कुत्र प्रदेशे वर्तमानः स चेतसा ग्राह्योऽप्राकृतदेशे सूर्यमण्डले वाऽन्यत्र वेत्याशङ्काया-

संविवेश। प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन्विशुद्धे विभवत्येष आत्मा ॥९॥

यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते याँश्च कामान्। तं तं लोकं जायते ताँश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद् भूतिकामः ॥१०॥

इति तृतीयमुण्डके प्रथमः खण्डः ॥३।१॥

माह—यस्मिन् शरीरप्रदेशे प्राणाः पञ्चधा प्राणापानादिभिः पञ्चभी रूपैः मुख्यप्राणः संविवेश प्रविष्टो वर्तते तत्रैव शरीरप्रदेशे हार्दाकाशे वर्तमानः चेतसा ग्राह्यः पूर्वोक्तसाधनद्वारा। चेतसा ग्राह्यमणुमात्मानं विशिनष्टि—यस्मिन्नात्मनि। परब्रह्मणीति यावत्। प्रजानां प्राणिनां प्राणैरितरैरिन्द्रियैः सह सर्वं समग्रमेव चित्तं मनः ओतं समर्पितमास्ते। यस्मिंश्च परमात्मनि विशुद्धे प्रसन्ने सति एषोऽहमितिबुद्धया गृह्यमाण आत्मा जीवात्मा विभवति विशेषेणापहतपाप्मत्वप्रभृतिगुणविशिष्टतया भवति आविर्भवति स एषोऽणुरात्मा वेदितव्यश्चेतसेत्यन्वयः। यद्वा यस्मिन् प्राण इति वाक्यस्थमपि यस्मिन्निति पदं परमात्मपरतयैव योज्यम् ॥९॥

परमपुरुषसाक्षात्कारवतो महिमानं प्रदर्शयति- यं यं लोकं पितृलोकं गन्धर्वलोकमपरमपि कमपि लोकं वा मनसा चेतसा संविभाति संकल्पयति याँश्च कामान् भोगान् राज्यादीन् कामयते प्रार्थयते। चिन्तयतीत्येतत्। विशुद्धसत्वो विशुद्धान्तःकरणः क्षीणरागद्वेषादिसवासनक्लेशः परमात्मज्ञानी तं तं संकल्पितं लोकं जयते प्राप्नोति ताँश्च काम्यमानान् कामान् भोगान् जयते। सत्यकामत्वादिधर्माविर्भावात् सर्वलोकसर्वकामाऽवाप्तिस्तस्य सुलभा संकल्पमात्रसाध्यत्वादिति भावः। तस्माद् यस्मादयं सत्यसंकल्पः सर्वमवाप्तुमवापयितुञ्च शक्नोति तस्माद्धेतोर्यो भूतिमैश्वर्यं कामयत इति भूतिकाम ऐश्वर्याभिलाषी जनः। हि निश्चयेन। आत्मज्ञं परमात्मसाक्षात्कारवन्तमर्चयेत् पूजयेत्। अर्चया प्रसन्नोऽयं परमात्मविन्मदीयमभिलषितं साधयिष्यतीतीच्छया तत्पूजा विधेयेत्यर्थः ॥१०॥

इति भगवद्रामानन्दाचार्यविरचिते मुण्डकोपनिषद आनन्दभाष्ये तृतीयमुण्डकस्य प्रथमः खण्डः ॥३।१॥

## अथ तृतीयमुण्डके द्वितीयः खण्डः

**स वेदैतत्परमं ब्रह्म धाम यत्र विश्वं निहितं भाति शुभ्रम्। उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्त्तन्ति धीराः ॥ १ ॥**

**कामान् यः कामयते मन्यमानः स कामभिर्जायते तत्र**

सकामस्य ब्रह्मवित्पूजाफलमैश्वर्यमुक्तं सम्प्रति कामनारहितस्य ब्रह्मवित्पूजाफलं निर्दिशति—स वेदैतदिति। सः प्रकृतो विशुद्धसत्वो ब्रह्मवित्। एतद् उक्तस्वरूपं ब्रह्म। परमपुरुषमित्येतत्। परममुत्कृष्टम्। धाम सर्वकामाश्रयत्वाद् धामशब्देन कथितम। वेद जानाति साक्षात् कुरुते। कीदृशं ब्रह्मेत्यत्राह—यत्र परब्रह्मणि निहितं समर्पितं वर्तमानमित्येतत्। विश्वं समग्रं जगत्। अस्तीति शेषः। यच्च ब्रह्म शुभ्रं भाति। यद्वा यत्र परब्रह्मणि निहितं विश्वं सकलं कल्याणगुणादि वस्तु शुभ्रं निर्दोषं भाति। एतादृशब्रह्मसाक्षात्कारकर्तारं पुरुषमुपासकविशेषं ये धीरा बुद्धिमन्तोऽकामा ऐश्वर्यादिकामनारहिताः सन्त उपासते परिचरन्ति अपरं देवमिव परमात्मानमिव ते धीरा मुमुक्षव एतच्छरीरोपादानतया लोकप्रसिद्धं शुक्रं बीजं चरमधातुशक्तिमतिवर्त्तन्ति अतिक्रामान्ति। न कामपि योनिं गच्छन्ति। जन्ममरणशून्या भवन्तीतिभावः ॥१॥

कामनात्यागस्यैव प्रधानसाधनतां मोक्षं प्रति दर्शयितुमाह—कामानिति। यो जनः कामान् शब्दादीन् देवमनुष्यत्वादींश्च दृष्टानदृष्टांश्च विषयान् मन्यमानस्तत्तत्काम्यविषयगतगुणाभिध्यानेन कामानेव बहुमानयन् कामयतेऽभिलष्यति स जनस्तत्र तत्र योनिषु देवादिषु कामभिः कामैरेवेच्छारूपैर्निमित्तैर्जायते समुत्पद्यते। तत्र तत्र योनौ जन्मबीजमस्य कामनैव भवतीत्यर्थः। यस्तु पर्याप्तकामः पर्याप्तं परिपूर्णं परंब्रह्म कामयत इति पर्याप्तकामस्तस्य परब्रह्मप्राप्तीच्छावतः। यद्वा पर्याप्ताः परिपूर्णाः कामा मनोरथा यस्य तस्य पर्याप्तकामस्य सर्वकामनाविनिर्मुक्तस्य। अत एव कृतात्मनः कृतो निश्चित आत्मा परमपुरुषो येन तादृशस्य जनस्य तु इहैव अत्रैव जन्मनि

**तत्र । पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः ॥ २ ॥**

**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् ॥३॥**

यद्वा प्रकृतिमण्डल एव । सर्वे कामा मनोरथाः प्रविलीयन्ति लुप्ता भवन्ति । विनश्यन्तीत्येतत् । निवृत्ततृष्णस्य समुपतिष्ठन्तोऽपि विषयाः तदीयक्षोभजननहेतवो न भवन्ति । विषयैरक्षुभ्यमाणस्य तु जन्मबीजभूतकामनारूपकारणाभावाज्जन्ममरणप्रसंगो न भवतीति भावः ॥२।

अयं पूर्ववर्णित आत्मा परमात्मा प्रवचनेन शास्त्रव्याख्यानरूपेण प्रवचनसाधनीभूतमननेन वा । कृतमनन एव प्रवचनं सम्यक्तया कर्तुमर्हतीति दृष्टमेतत् । न लभ्यो न साक्षात्कर्त्तुमर्हः । न मेधया मेधा शास्त्रार्थावगाहनधारणसमर्था प्रज्ञा तया प्रज्ञया शास्त्रार्थोऽवगाह्यते तदनन्तरञ्च ध्रियतेऽपि तया तन्मात्रेण न लभ्यः । यद्वा मेधाऽत्र निदिध्यासनं न निदिध्यासनमात्रेण वा लभ्यः । न बहुना श्रुतेन पुनः पुनः शास्त्रश्रवणेन, बहूनां शास्त्राणां श्रवणेन वा न लभ्यः। श्रवणादिमात्रेण तत्समूहेन वा नास्य लाभः किन्तु परमपुरुषप्रसादोऽप्यपेक्षित इति भावः । तर्हि केन लभ्य इत्यत्राह—यमेवैष वृणुते । एष परमात्मा यमुपासकं वृणुते प्रार्थयते तेनैवोपासकेन लभ्यः । परमात्मा हि तमेवोपासकं प्रार्थयते य उपासकोऽस्यात्यन्तं प्रियो भवेत् । उपासकश्च परमात्मनोऽत्यन्तं प्रियः स एव भवति यस्य परमात्माऽत्यन्तं प्रियो भवति । द्वयोस्सुहृदोः परस्परमत्यन्तं प्रीतिमतोः परस्परप्रार्थनीयता । तेन कथं लभ्य इत्यत्राह—तस्यैष आत्मा । एष आत्मा परमात्मा तस्य वरणकर्मण उपासकस्य कृते स्वां तनुं स्वतनुं स्वस्वरूपं विवृणुते प्रकाशयति भगवता स्वस्वरूपे तस्मै प्रकाशिते स उपासको भगवत्स्वरूपं साक्षात्कर्त्तुमर्हति यथा पार्थायम् भगवता स्वीयविराट्स्वरूपे प्रकाशिते पार्थेन तत्साक्षात्कारः कृतो नान्येनेति भावः ॥३॥

**नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गात् । एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ॥४॥**

**संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः**

सम्प्रति बलादीनां सहकारित्वमन्वयव्यतिरेकाभ्यां प्रदर्शयति-नायमात्मेति । अयमात्मा प्रस्तुतः परमपुरुषः । बलहीनेन न लभ्यः । बलञ्च शारीरं मानसं चेत्युभयमत्रापेक्षितम् । परमात्मोपासने क्रियमाणेषु तपःस्वाध्यायार्चादिषु तन्निर्वर्त्तनसामर्थ्यं बलं शारीरम् । मानसं बलं धैर्यमेव । उभयोरेकतरस्य द्वयोर्वाऽभावो यस्यास्ति न तेनोपासकेन लभ्य इत्यर्थः । न च प्रमादात् प्रमादो हि मनसो ध्येये परमात्मनि समर्पितस्य ततः प्रच्युतिः । स च विषयान्तरप्रवेशेन स्तब्धीभावेन भवति तादृशप्रमादयुक्तमनसा पुंसा न लभ्य इत्यर्थः । तपसो वाऽप्यलिङ्गात् तपः कृच्छ्रचान्द्रायणादिकं शरीरशोषजनकम् । लिङ्गं वर्णाश्रमसूचकचिह्नविशेषः शिखासूत्रतिलकतुलसीकण्ठमालिकादिः। यत्राश्रमे गृहस्थादौ यत्र च वर्णे ब्राह्मणादौ वर्तमान उपासकः तपश्चरति तस्याश्रमस्य वर्णस्य च सूचकं लिङ्गं तेनावश्यं धारणीयम् । वर्णाश्रमाभिव्यञ्जकलिङ्गहीनेन क्रियमाणमपि तपः परमात्मलाभं न फलतीत्यर्थः । एवं व्यतिरेकमुपदर्श्यान्वयमपि दर्शयति एतैरुपायैरिति। यस्तु विद्वान् विवेकवानेतैर्बलाऽप्रमादसलिङ्गतपोभिरुपायैरुपकरणैः सहकारिभिः सहितः सन् यतते परमात्मज्ञानाय प्रयस्यति तस्योपासकस्य आत्मा आत्मस्वरूपं ब्रह्म ब्रह्माख्यं धाम प्राप्यं विशते प्राप्नोति । यद्वा ब्रह्मणो धाम ब्रह्मधाम अप्राकृतो देशविशेषः। दिव्यं ब्रह्मपुरं साकेताख्यमिति यावत् । विशते प्रविशति तत्र प्रयाति ततश्च तं प्राप्नोतीत्यर्थः ॥४॥

ब्रह्मधाम विशतीत्युक्तं ब्रह्मधामप्रविष्टस्य स्थितिं निरूपयति—ऋषयः परमात्मदर्शिन एनं परमात्मानं । सम्प्राप्य तत्र देशेविशेषे ज्ञानतृप्ता ज्ञानेन परमात्मानुभवरूपेण तन्मात्रेणैव तृप्ता निरतिशयं सुखं प्राप्ताः । न हि बद्धात्मान इव भोजनपानादिना बाह्येन साधनेन

**प्रशान्ताः । ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्व-मेवाविशन्ति ॥ ५ ॥**

**वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्ध-**

तृप्तास्तेषां तदपेक्षाविरहादित्यर्थः । कृतात्मानो निश्चितपरमात्मस्वरूपाः । वीतरागा वीतः प्रणष्टो रागो विषयाभिलाषो येषां तादृशा अत एव प्रशान्ताः प्रकर्षेण शान्ता उपरतेन्द्रियग्रामाः ते धीरा निरतिशयसूक्ष्मबुद्धयः सर्वगं सर्वत्र व्यापकं परमात्मानं सर्वतः प्राप्य सर्ववस्तुषु उपलभ्य युक्तात्मानो युक्तः प्रणिहित आत्मा मनो येस्तादृशाः प्रणिहितमनसः सर्वमेवाविशन्ति सर्वं वस्तु अनुभवन्ति । यत्र-यत्र मनो निदधति तदेवानुभवितुं शक्ता भवन्तीत्यर्थः । परमात्मज्ञानवत्तया तत्प्रकारभूतानि सर्वाणि चिदचिद्वस्तूनि तदनुभवविषयतां सम्पद्यन्त इति भाव ॥५॥

वेदान्तविज्ञानसुनिश्चितार्था वेदान्तानामुपनिषदां विज्ञानं तेन सुनिश्चितोऽवधारितोर्थः परमात्मरूपो यैस्तादृशाः। वेदान्तश्रवणमननिदिध्यासनैः परमात्मप्रसादसहितैः परब्रह्मरूपवेदान्तार्थसाक्षात्कारो येषां जातः तादृशा इत्यर्थः । ते के भवन्तीत्यत्राह–सन्न्यासयोगात् सन्न्यासः परमात्मव्यतिरिक्तविषयककामनापरित्यागस्तस्य योगात् सम्बन्धात् । शुद्धसत्वाः शुद्धं विगलितकामनाकतया रागद्वेषादिमलरहितं सत्वमन्तः–करणं येषां ते । पवित्रचेतस इत्यर्थः । यतयो नियमितबाह्यान्तरकरणाः । ते ब्रह्मसाक्षात्कारवन्तः । तु तुशब्दोः ब्रह्मसाक्षात्कारविरहिणो बद्धान् व्यवच्छिनत्ति । परान्तकाले मरणसमये यः प्राकृतशरीरत्यागकालः सोऽन्तकाल इत्युच्यते । स शरीरत्यागबाहुल्यादनन्तः । तेषु पर उत्कृष्टोऽन्तकालश्चरमप्राकृतशरीरत्यागकालः तस्मिन् प्राकृतचरमशरीरत्यागकाल इत्यर्थः । परामृताः परः परमात्मा एव अमृतममृतवदुपभोग्यो येषां तादृशाः । परब्रह्मानुभवरूपमुपभोगं कुर्वाणाः । सर्वे ब्रह्मदर्शिनो

सत्त्वाः । ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥ ६ ॥

गताः कला पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु । परिमुच्यन्ति परितो मुक्ता भवन्ति । सर्वबाधबहिर्गता भवन्तीत्यर्थः । "स्वेन रूपेणाभिनिष्पद्यते" इति श्रुत्यनुसारमाविर्भूतापहतपाप्मत्वादि-गुणाष्टकविशिष्टा भवन्तीति भावः । कुत्रैवं भवन्तीत्यमाह–ब्रह्मलोके ब्रह्मणः परमपुरुषस्य लोकेऽप्राकृते ब्रह्मपुरे साकेताख्य इत्यर्थः । साकेते गत्वा स्वासाधारणं स्वरूपमुपगच्छन्तीति भावः । परामृतादिति पञ्चम्यन्तपाठे तु परमुत्कृष्टममृतममृतवदुपभोग्यम् । तच्च परं ब्रह्मैव तस्मात् परामृतात् पर-ब्रह्मणो निमित्तभूतात् परिमुच्यन्तीतियोज्यम् । मुक्तौ परमात्मन एव मुख्यो-पायतायाः प्रतिपादितत्वात् ॥६॥

"कलाः प्राणश्रद्धादिनामान्ताः "सप्राणमसृजत प्राणाच्छ्रद्धामि"त्यादि-श्रुतिप्रोक्ताः । पञ्चदश पञ्चदशत्वसंख्याकाः । प्रतिष्ठाः स्वस्वोपादानभू-तानि तत्त्वानि गता भवन्ति मुक्तिसमये । याभिः कलाभि शरीरमारब्धं जीवस्य तासु कर्मात्मिकामेकां कलां भुक्त्वा इतरा पञ्चदश मुच्यमानजीव सम्बन्धिन्यः कलाः स्वोपादानेषु ससंर्गविशेषं गच्छन्ति । लीना भवन्तीति यावत् । प्रतिष्ठा इति द्वितीयाबहुवचनान्तं पदम् । देवाश्च सर्वे देहाश्रय-चक्षुरादिकरणस्थानस्थिताश्चक्षुराद्यधिष्ठातार आदित्यादयः सर्वे देवाः । प्रतिदेवतासु प्रतिनियतासु देवतासु आदित्यादिषु देवेषु गता भवन्ति । चक्षुरादिगोलकं परित्यज्य स्वीये देवस्वरूपे गच्छन्ति । अधिष्ठानक्रियां न कुर्वन्तीत्येतत् । यद्वा देवा वागादीनीन्द्रियाणि प्रतिदेवतासु बाह्यादिष्व-धिष्ठातृषु देवेषु गता भवन्ति "यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यमि"त्यादिश्रुतेः । कर्माणि षोडशकलासु अन्यतम-कलारूपाणि सञ्चितान्यदत्तफलानि प्रारब्धव्यतिरिक्तानि प्रारब्धकर्मणां भोग-द्वारैव क्षयात् । विज्ञानमय आत्मा च विज्ञानप्रचुरो जीवात्मा चेति सर्वे परेऽव्यये सर्वतः परभूते भूतयोनावक्षरेऽविनाशिनि परमात्मनि एकी-

तासु। कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकी-
भवन्ति ॥७॥

**यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे**

भवन्ति अविभक्ततां गच्छन्ति संसर्गविशेषद्वारा। सचाविभागो द्वेधा लयाद् भेदकाकारपरित्यागाच्च। प्रथमः कर्मणां भगवतो धर्मभूतज्ञाने लयादेव भवति। द्वितीयस्तु जीवात्मनो देवमनुष्यादिनाम्नः तादृशरूपस्य च परित्यागाद् भवति। मुक्तिदशायां देवादिनामरूपस्याभावात् ॥७॥

एकी भवनमेव दृष्टान्तं प्रदर्श्य श्रुतिर्विवृणोति-यथा नद्य इति। नद्यो गंगायमुनादिकाः स्यन्दमानाः प्रस्रवन्त्य उच्चप्रदेशादुत्पत्तिस्थानाद् हिमवदादिगिरिभ्य इत्येतत्। अधःप्रदेशं यान्त्यः समुद्रे महोदधौ गत्वा नामरूपे स्वीयं गङ्गादिकं नाम स्वीयं शुक्लकृष्णादिकं रूपञ्च विहाय परित्यज्य अस्तं गच्छन्ति पृथग्भूततया दर्शनं न यान्ति अतः समुद्रे एकीभूता इति व्यवह्रियन्ते तथैव विद्वान् परमात्मसाक्षात्कारवान् नामरूपाद्विमुक्तो मनुष्यदेवादिकं चैत्रमैत्रादिकं वा स्वीयं नाम मनुष्यदेवाद्याकारात्मकं रूपञ्च नामरूपशब्दयोः समाहारो द्वन्द्वे नामरूपं। तस्मात् नामरूपाभ्यामित्यर्थः,। विमुक्तो रहितः सन् परात्परम् 'अक्षरात् परतः पर' इति श्रुत्युक्तं दिव्यं पुरुषं परमात्मानमुपैति प्राप्नोति। अयं भावः पर्वतनिःसृता जलप्रवाहा एव गङ्गादिकं नाम बिभ्रति शुक्लनीलादिकं रूपं च बिभ्रति। समुद्रसङ्गमकाले पूर्वोक्तं नाम रूपञ्च परित्यज्यन्ति तेन गङ्गायमुनादिनामभिः शुक्लनीलादिरूपैश्च व्यवहरणीया ते न भवन्ति अतः समुद्रे एकीभूता इति व्यवहारो भवति नतु गङ्गादिप्रवाहजलस्य सामुद्रजलस्याभेदरूपैकता भवति योगिभिः सूक्ष्मदर्शिभिः तयोर्भेदस्य दृश्यत्वात् तथैव विदुषः चैत्रादिनामत्यागो भवति मनुष्यादिरूपपरित्यागश्च भवति मुक्तिसमये अतो भेदकाभावात् परमात्मगुणसदृशापहतपाप्मत्वादीनां जीवगुणानां स्वाभाविकानामाविर्भावाच्च जीवः परमात्मना एकीभूत इति व्यवह्रियतां नाम न तथापि तयोरभेदरूप ऐकीभावस्तत्र भवति। तयोर्भेदस्य मुक्तानां परस्प-

**विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥ ८॥**

**स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति। तरति**

रभेदस्य च तैरेव मुक्तैः सूक्ष्मदर्शिभिर्दृश्यमानत्वात्; अत एकीभवतीत्यस्य पृथक्प्रतिपत्तियोग्यता तदानीं न तिष्ठति मुक्तिप्राक्काले इवेत्यर्थः। एतेन जीवो ब्रह्माभिन्नो भवति इत्यर्थकल्पनं मायिनां दृष्टान्ताननुगुणमेवेति न युक्तमिति बोध्यम् ॥८॥

क्रियासिद्धौ सत्यामपि फलप्राप्तौ विघ्नोपधायकस्य कस्य कस्यचिद्दृष्टस्यादृष्टस्य वा सत्वे न फलोपलब्धिर्भवतीति दृष्टं लोके भवति तद्वदेव ब्रह्मसाक्षात्कारजनितेऽपि प्रतिबन्धके समुपनते कस्यचिन्मोक्षप्राप्तिर्न स्यादन्यैव काचिद्गतिः स्यादित्याशङ्कायामाह— स य इति। यः उपासकः तत्प्रसिद्धं पूर्वोक्तमन्त्रैः कथितम्। परमं सर्वत उत्कृष्टं ब्रह्म अक्षरं भूतयोनिशब्दितं परमात्मानं वेद साक्षात्करोति स ह विद्वान् ब्रह्मैव भवति ब्रह्मसदृशमेव भवति अपहतपाप्मत्वादिब्रह्मगुणाविर्भावोद् ब्रह्मपरमसाम्यलक्षणां गतिं मुक्त्यापरपार्यायामेव गच्छति नान्यां गतिं यातीति भावः। मुख्यं तत्त्वफलमुक्त्वाऽऽनुषङ्गिकं फलं वदति—नास्याब्रह्मवित् कुले भवति। अस्य ब्रह्मविद उपासकस्य कुले कश्चित् पुत्रपौत्रादिरब्रह्मविद् ब्रह्मज्ञानविधुरो न भवति। तत्कुलोत्पन्नो ब्रह्मवेत्ता भवत्येव जनकस्येव राज्ञ इत्यर्थः। तरति शोकम्, स ब्रह्मविच्छोकमिष्टवस्तुप्राप्त्यभावनिमित्तं मानसं तापं तरति समतिक्रान्तो भवति जीवनकाले एव। परमेष्टरूपे ब्रह्मण्येव सर्वेष्टवस्तूनामन्तर्भावात् किं वैकल्यप्रयुक्तः शोक एनमास्कन्देदिति भावः। तरति पाप्मानं शोकशब्दवाच्यसन्तापमूलभूतं पाप्मानं धर्माऽधर्मरूपं तरति अतिक्रान्तो भवति। सन्तापकारणं तापमपि ब्रह्मविदः तत्त्वज्ञानमहात्म्यादेव शीघ्रं विनश्यतीति भावः। ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुनेति भगवद्वचनानुसारात्। गुहाग्रन्थिभ्यो विमुक्तो गुहा हृदयकुहरं तत्सम्बन्धिन्यः तत्र वर्तमाना ग्रन्थिवद्दुर्मोच्यत्वाद् ग्रन्थिभूता अनादिकालतो रूढमूला

शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तो भवति ॥९॥

तदेतदृचाऽभ्युक्तम्—क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः । तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद् यैस्तु चीर्णम् ॥ १० ॥

तदेतत् सत्यमृषिरङ्गिराः प्रोवाच नैतदचीर्णव्रतो-

रागद्वेषादयः तेभ्यः सवासनरागद्वेषादिभ्यो विमुक्तो परित्यक्तः ज्ञानमाहा-त्म्यादेव प्रक्षीणसवासनरागद्वेषादिरिति भावः । एवं भूतः सन् अमृतो भवति आविर्भूतापहतपाप्मत्वसत्यकामत्वादिरूपगुणाकष्टकविशिष्टो भवति ॥९॥

सम्प्रति ब्रह्मविद्याप्रदानं यादृशाय कार्यं तादृशं पात्रविशेषं वर्णयन् उपसंहरति–तदेतद् । ब्रह्मविद्यासम्प्रदानविधानं ऋचा वक्ष्यमाणया वक्ष्य-माणेन मन्त्रेणेत्यर्थः । अभ्युक्तं प्रकाशितम् । वक्ष्यमाणमन्त्रेण ब्रह्मविद्यायोग्यः पात्रविशेषः प्रकाशितो भवतीति भावः । मन्त्रमेव वदति–क्रियावन्त इति क्रिया वेदोक्ता नित्यनैमित्तिकरूपाः सन्ति येषु तादृशा यथोक्तक-र्मानुष्ठानपरा इत्यर्थः । श्रोत्रियाश्छन्दोऽध्ययनं कुर्वाणाः । ब्रह्मनिष्ठा ब्रह्मणि निष्ठा जिज्ञासात्मिका स्थितिर्येषां ते ब्रह्मजिज्ञासमानाः । एकर्षिम् एकः ऋषिः ऋत्विग् यत्र स एकर्षिः एतन्नाम्ना प्रसिद्धमग्निहोत्रं कर्म, श्रद्धयन्तः तद्विषयकास्तिक्यबुद्धिविशिष्टाः सन्तः स्वयं जुह्वते । स्वयमेव जुह्वतीत्यर्थः । किञ्च आथर्वणिकानां यत् शिरोव्रतं शिरसि ज्वलदङ्गार-पात्रधारणरूपं तद् विधिवत् शास्त्रोक्तविधानपूर्वकं यैः पुरुषैः चीर्णं समनुष्ठितं तेषामेव एकर्षिहवनकर्तॄणां विधिवच्चीर्णशिरोव्रतानाञ्च कृते एतां प्रकृतोपनिषदं ब्रह्मविद्यां ब्रह्मविद्याप्रतिपादकग्रन्थरूपां वदेदु-पदिशेत् ॥१०॥

तदेतत् सत्यमक्षरं परमपुरुषमङ्गिरा ऋषिः प्रोवाच उपदिदेश शौनकाय स्वशिष्याय विधिवदुपगम्य पृच्छापरवशाय करुणापरः सन्नित्यर्थः । एतदुपनिषद्रूपं ब्रह्मविद्याप्रतिपादकं शास्त्रमचीर्णव्रतो विधिवदननुष्ठित-शिरोव्रतो नाधीते न पठति । अचीर्णव्रतैरियमुपनिषद् या शौनकाय प्रोक्ताऽङ्गिरसे सा नाध्येतव्येति चीर्णव्रतानामेव फलजनकत्वादिति भावः ।

ऽधीते । नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥११॥

इति तृतीयमुण्डके द्वितीयः खण्डः ।

समाप्ता मुण्डकोपनिषत् ।

पूर्वमन्त्रेऽध्यायकं प्रत्युक्तमत्र मन्त्रे तु अध्येतारं प्रत्युक्तमिति न द्विरुक्तिः । नमः परमऋषिभ्य इति द्विः कथनं समाप्तिद्योतनाय आदरातिशयसूचनाय च । तेन समाप्तेयं ब्रह्मविद्या । इयं विद्या ब्रह्मादिपरम्परया यैर्लब्धा तेभ्यो परमऋषिभ्यो नमो मदीयो नमस्कार इत्यर्थः । तथा परम्परागता ये परमऋषयो ब्रह्मादयः परब्रह्मविषयकसाक्षात्कारवन्तः तेभ्यो नम इत्यर्थः ॥११॥

इति भगवद् श्रीरामानन्दाचार्यविरचिते मुण्डकोपनिषद
आनन्दभाष्ये तृतीयमुण्डके द्वितीयः खण्डः ॥३।२॥
समाप्तञ्चेदं मुण्डकोपनिषद्भाष्यम् ॥

—०—

पण्डितसम्राट्स्वामिश्रीवैष्णवाचार्यनिर्मितम्

# आचार्यवन्दनम्

श्रीरामं वसुधात्मजामनिलजं वेधोवशिष्ठौ तथा
तातं व्यासमुनेः शुकेन सहितं व्यासं च बोधायनम् ।
श्रीगङ्गाधरदेशिकं वरसदाचार्यं च रामेश्वरं
द्वारं देवयुतं श्रुतार्यसहितं श्यामं चिदानन्दकम् ॥१॥
पूर्णानन्दयुतं श्रियार्यसहितं हर्यार्यवेदान्तिनं
त्र्यय्यन्तार्थविदं त्रिदण्डिषु मणिं श्रीराघवानन्दकम् ।
आनन्दाख्यसुभाष्यरत्नरचकं रामं महायोगिनं
रामानन्दमुनिं यतिक्षितिपतिं वन्दामहे शाश्वतम् ॥२॥
वैष्णवभाष्यकारश्रीवैष्णवाचार्यनिर्मितम् ।
आचार्यवन्दनं भूयात् सर्वकल्याणकारकम् ॥३॥

—०—

३—श्रीरामानन्दग्रन्थमालायास्तृतीयं पुष्पम् ।

भगवच्छ्रीरामानन्दाचार्यप्रणीतानन्दभाष्योपेता

# ईशकेनकठप्रश्नमुण्डकमाण्डूक्य-तैत्तिरीयैतरेयोपनिषदः




**संशोधकः**—पण्डितसम्राट् स्वामी श्रीवैष्णवाचार्य
वेदान्तपीठाचार्य ( अहमदाबाद )

गुरुपूर्णिमा
सन् १९६९ ई.

श्रीरामानन्दाब्द ६७०
सर्वेऽधिकाराः स्वायत्तीकृताः

मूल्य
६/००

प्रकाशक :-श्रीरामानन्दवेदान्तप्रचारकसमिति अहमदाबाद

प्रथमावृत्ति-१००० प्रति

मूल्य-६/००

प्राप्तिस्थान-१-श्रीरामानन्दवेदान्तप्रचारकसमितिकार्यालय
अहमदाबाद

२-श्रीमोतीलाल बनारसीदास
चौक-वाराणसी

સમરીતિર્મહાતેજાઃ પરબ્રહ્મ (નાતનઃ)
જયતાઽજ્ઞાનકી નાશો વેદવેદ્યો મહામતિઃ ||

ankurnagpal108@gmail.com

मुद्रक :—वैद्यराज स्वामी श्रीत्रिभुवनदासजी शास्त्री
श्रीरामानन्दप्रिन्टिंगप्रेस
कांकरियारोड-अहमदाबाद-२२